# SRIHARSHA CHARITA

OR

LIFE OF RAJAH HARSHA BARDHANA

IN PROSE

BY

BANA BHATTA

EDITED WITH MODIFICATIONS

BY

PANDIT JIBANANDA VIDYASAGARA B. A.

Superintendent, Free Sanskrit College.

---

**CALCUTTA:**

PRINTED AT THE SUCHARU PRESS.

1876.

প্রিণ্টর শ্রীরামব্রহ্ম মুখোপাধ্যায়।

To be had from Pandit Jibananda Vidyasagara. B. A. Superintendent, Free Sanskrit College, Calcutta.

# पण्डित-कुल-तिलक पूज्यपाद श्रीमत् तर्कवाचस्पति पाद-प्रणीत-प्रकाशित पुस्तकान्येतानि।

१ आशुबोध व्याकरणम् ३।०
२ धातुरूपादर्शः २
३ शब्दस्तोम-महानिधि संस्कृत अभिधान १०
४ सिद्धान्तकौमुदी सरलाटीकासहिता ११
५ सिद्धान्तबिन्दुसार (वेदान्त) ॥०
६ तुलादानादि पद्धति (वङ्गाक्षरैः) ४
७ गयाश्राद्धादि पद्धति १
८ शब्दार्थ [illegible] ।॥०
९ वाक्यमञ्जरी (वङ्गाक्षरैः) ।०
१० छन्दोमञ्जरी तथा वृत्तरत्नाकर सटीक ॥=
११ वेणीसंहार नाटक सटीक १
१२ मुद्राराक्षस नाटक सटीक १॥०
१३ रत्नावली ।॥०
१४ मालविकाग्निमित्र सटीक १॥०
१५ धनञ्जय विजय सटीक ।०
१६ महावीरचरित १॥०
१७ साङ्ख्यतत्त्व कौमुदी सटीक २
१८ वैयाकरणभूषणसार ।॥०
१९ लीलावती ।॥०
२० वे[illegible]गणित १
२१ शिशुपालवध सटीक (माघ) ४
२२ किरातार्जुनीय सटीक (भारवि) २॥
२३ कुमारसम्भव उत्तरखण्ड ॥
२४ कुमारसम्भव पूर्वखण्ड सटीक ।॥०
२५ अष्टकम् पाणिनीयम् ।॥०
२६ वाचस्पत्यम् संस्कृत बृहदभिधान १००
२७ कादम्बरी सटीक [illegible]
२८ राजप्रशस्ति =
२९ अनुमानचिन्तामणि तथा अनुमानदीधिति ४
३० सर्वदर्शन संग्रह १
३१ भामिनीविलास सटीक
३२ हितोपदेश सटीक १
३३ भावार्थरत्नोद्दक्तमुक्तावलीसहित [illegible]
३४ बहुविवाहवाद ।०
३५ दशकुमारचरित सटीक १॥०
३६ परिभाषेन्दुशेखर ।॥०
३७ कविकल्पद्रुम (वोपदेवकृत) ॥१
३८ चक्रदत्त वैद्यक १॥०
३९ उणादिसूत्र सटीक २
४० मेदिनी कोष १
४१ पञ्चतन्त्रम् श्रीविष्णुशर्म सङ्कलितम् २॥०
४२ विद्वन्मोदतरङ्गिणी चम्पू काव्य [illegible]
४३ माधवचम्पू ।=
४४ तर्कसंग्रह इंराजी अनुवाद सहित ॥०
४५ प्रबन्धराज [illegible] श्री[illegible]कवि विरचित १
४६ [illegible]वेकचूडामणि श्रीमत् शङ्कराचार्य विरचित ।॥

# श्रीहर्षचरितम्

महाकवि श्रीवाणभट्टविरचितम् ।

बि, ए, उपाधि-धारिणा

श्रीजीवानन्द विद्यासागर-भट्टाचार्य्येण

संस्कृतं परिवर्त्तितं प्रकाशितञ्च ।

कलिकातानगरे

सुधायन्त्रे

मुद्रितम् ।

इं १८७६

# श्रीहर्षचरितम् ।



## प्रथमोच्छ्वासः ।

चतुर्मुखमुखाम्भोजवनहंसवधूर्मम ।
मानसे रमतां दीर्घं सर्वशुक्ला सरस्वती ।
कथमाख्यायिकाकारा न ते वन्द्याः कवीश्वराः ।
कवीनामगलद्दर्पो नूनं वासवदत्तया ॥
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ।
पदबन्धोज्ज्वलोहारिकृतकण्ठकमस्थितिः ॥
भट्टारहरिचन्द्रस्य पद्यबन्धो नृपायते ।
कुविनाशनमग्राम्य मकरोत्सातवाहनः ॥
विशुद्धजातिभिः कोशं रत्नैरिव सुभाषितैः ।
कीर्तिः प्रवरसेनस्य प्रयाता कुमुदोज्ज्वला ॥
सागरस्य परं पारं कपिसेनेव सेतुना ।
सूत्रधारकृतारम्भै र्नाटकै र्बहुभूमिकैः ॥
सपताकै र्यशोलेभे भासो देवकुलैरिव ।
निसर्गसूरवंशस्य कालिदासस्य सूक्तिषु ॥
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ।
आढ्यराजकृतोच्छ्वासै र्हृदयस्थैः स्मृतैरपि ॥

जिह्वान्तः कृष्यमाणेव न कवित्वे प्रवर्तते ।
तथापि नृपतेर्भक्त्या भीतोनिर्वहणाकुलः ॥
करोम्याख्यायिकाम्भोधौ जिह्वाप्लवनचापलम् ।
सुखप्रबोधललिता सुवर्णघटनोज्ज्वला ॥
शब्दैराख्यायिका भाति शय्येव प्रतिपादुकैः ।
दर्शयन्ती मुखे खेदं प्रस्खलन्ती पदे पदे ॥
कथञ्चिन्नीयते शय्यां कथा नववधूरिव ।
जयज्ज्वलत्प्रतापज्वलनप्राकारकृतजगद्रक्षः ॥
सकलप्रणयिमनोरथसिद्धिः श्रीपर्वतोहर्षः ।

एवमनुश्रूयते । पुरा किल भगवान् स्वं लोकमधितिष्ठन् परमेष्ठी विकासिनि पद्मविष्टरे समुपविष्टः शुनासीरप्रमुखैः गीर्वाणैः परिवृतो ब्रह्मोदिताः कथाः कुर्वन्नन्याश्च निरवद्या विद्यागोष्ठीरविभावयत् । कदाचिदासां चक्रे तथासीनस्य तन्त्रिभुवनप्रतीक्ष्यं सर्वे दक्षचाक्षुषप्रभृतयः सप्रजापतयः सर्वे च सप्तर्षिपुरःसरमहामुनयः सिषेविरे । केचिदृचःस्तुतिचतुराः समुदाहरन् । केचिदपचितिभाञ्जि यजूंषि अपठन् । केचित् प्रशंसामालीढा मानिजगुः । अपरे तु विहितकर्मक्रियातन्त्रान्मन्त्रानाचचक्षिरे । विद्याविसंवादकृताश्च तत्र तेषामन्योन्यस्य विवादाश्च प्रादुरभूवन् । अथातिरोषणः प्रकृत्या महातपा मुनिरत्रेस्तनयस्तारापतेर्भ्राता नाम्ना द्वितीयेन मन्दुनाम्ना मुनिना सह कलहायमानः सामगायन्क्रोधान्धो विस्वरमकरोत् । ससर्पेषु शापभयप्रतिपन्नमौनेषु मुनिष्वन्यालापलीलया चावधीरयति कमलासम्भवे कुमारीकिञ्चिदुत्क्रान्तबालभावे भूषितनवयौवने वयसि वर्तमाना गृहीतचामरप्रचल-

भुजलता पितामहमुपवीजयन्ती निर्भरस्तननाड़नजनितरागाभ्यामिव स्वभावारुणाभ्यां पादपल्लवाभ्यामुपासमाना शिष्यद्वयेनेव पदक्रममुखरेण नूपुरयुगलेन वाचालितचरणा धर्मनगरतोरणस्तम्भविभ्रमं बिभ्राणा जङ्घाद्वितीयं सलीलमुत्कलहंसकुलकलालापिनि मेखलादाम्नि विन्यस्तवामहस्तकिसलया विद्वन्मानसनिवासलग्नेन गुणकलापेनेवांसावलम्बिना ब्रह्मसूत्रेण पवित्रीकृतकाया भास्वन्मध्यनायकमनेकमुक्तानुयातमपवर्गमार्गमिव हारमुरसा समुद्वहन्ती वदनप्रविष्टं सर्वविद्यावधूचरणालक्तकपाटलेनेव स्फुरता दशनच्छदेन विराजमाना संक्रान्तकमलासनकृष्णाजिनप्रतिबिम्बां मधुरगीताकर्णनावतीर्णशशिहरिणामिव कपोलस्थलीन्दधाना तिर्यक्साचीकृतसमुन्नमितैकभ्रूलता श्रोत्रमेकं विस्वरश्रवणकलुषितं प्रक्षालयन्तीवापाङ्गनिर्गतेन लोचनांशुजलप्रवाहेणेतरश्रवणेन विकसितसिन्धुवारमञ्जरीजुषा हसितेन प्रकटितविद्यामदा श्रुतिप्रणयिभिः प्रणवैरिव कर्णावतंसमधुकरकुलैरुपास्यमाना सुकरविमलेन प्रज्ञाप्रतानेनांशुकेनाच्छादिततनुलता वाङ्मयमिव दिक्षु दशनज्योत्स्नालोकं विकिरन्ती देवी सरस्वती श्रुत्वा जहास ।

दृष्ट्वा तु तां तथा हसन्तीं स मुनिराः पापे! दुर्गृहीतविद्यालवावलेपे! दुर्विदग्धे! मामप्युपहससीत्युक्त्वा शिरःकम्पविशीर्यमाणबन्धविसरैर्भस्मीपतत्तड़ित्तन्तुपिङ्गलिम्नो जटासञ्चयस्य रोचिषा सिञ्चन्निव रोषदहनद्रवेण दश दिशः कृतकालसन्निधानामिवान्धकारितललाटाष्टपदामन्तकमण्डनपत्रभङ्गमकरीकारिकां भ्रूकुटिमाबध्नन्नतिलोहितेन चक्षुषाग्नेय्य रुधिरोपहारमिवाम-

षं देवतायै प्रयच्छन्निदं यदष्टदशनच्छदो दन्तांशुच्छलेन भय-पलायमानां वाचमिव विस्रंस्यमानांस्रंसिनि शापशासनपटस्येव ग्रथ्नन् ग्रन्थिमन्यथा कृष्णाजिनस्य स्वेदप्रतिबिम्बितैः शापभया च्छरणागतैरिव सुरासुरमुनिभिः प्रतिपन्नसर्वावयवः कोप-तरलिताङ्गुलिना करेण प्रसादलग्नां मत्सरावलिकामिवाक्षमा-लां विक्षिप्य कामण्डलवेन वारिणा समुपस्पृश्य शापजलं जग्राह ।

अत्रान्तरे स्वयम्भुवोऽभ्यासे समुपविष्टा देवी पीयूष-फेनपटलपाण्डुरं कल्पद्रुमदुकूलवल्कलं वसाना विसतन्तुमये-नांशुकेनोन्नतस्तनमध्यनिबद्धगात्रिका ग्रथितपोनिर्जितत्रिभु-वनजयपताकाभिरिव तिसृभिर्भस्मत्रिपुण्ड्रराजिभिर्विराजित-ललाटाजिरास्कन्धावलम्बिना फेनधवलेन तपःप्रभावकुण्डली-कृतेन गङ्गास्रोतसेव योगपट्टकेन विराजितवैकक्ष्येणासव्येन ब्रह्मोत्पत्तिपुण्डरीककमण्डलुकरेण कलयन्ती दक्षिणमक्ष-मालापरिक्षेपं कम्बुनिर्मोकदन्तुरं तर्जनतरलिततर्जनीकं हस्त-मुत्क्षिपन्ती आः! पाप! क्रोधोपहत! दुरात्मन्नात्मज्ञ! ब्रह्म-बन्धो! मुनिखेटक! निराकृते! कथमात्मस्खलितविलक्ष! सक-लसुरासुरमुनिमनुजवन्दनीयां त्रिभुवनमातरं सरस्वतीं ममुम-भिलषसीत्युक्त्वा रोषविमुक्तवेत्रासनैरोङ्कारमुखरमुखैरुत्क्षे-पदोलायमानजटाभारभरितशिरोभिः परिकरबन्धभ्रमितकृ-ष्णाजिनच्छायाश्यामायमानदिवसैरमर्षनिश्वासदोलाप्रेङ्खोलि-तब्रह्मलोकैः सोमरसमिव स्वेदविसरव्याजेन स्रवद्भिरग्निहोत्र-पवित्रभस्मस्मेरललाटैः कुशतन्तुचीरचीवरिभिः ऋषिभिः प्रहर णीकृतदण्डकमण्डलुमण्डलैर्मूर्तैश्चतुर्भिर्वेदैः रक्ष बृसीमपहाय

सावित्री समुत्तस्थे। ततो मर्षय मर्षय भगवन्नभूमिरेषा शापस्येत्यनुशास्यमानोऽपि तापसै रुपाध्यायस्खलितमेकं क्षमस्वेति बद्धाञ्जलिपुटै प्रसाद्यमानोऽपि शिष्यैः पुत्र ! माकृथा स्तपसः प्रत्यूहमिति निवार्यमाणोऽप्यखिला रोषावेशविवशो दुर्वासा दुर्विनीते! व्यपनयामि ते विद्यालवावलेपविशेषजनिता मुन्नतिमधस्तात् गच्छ मर्त्यलोकमित्युक्त्वा तच्छापोदकं विससर्ज । ततः प्रतिशापदानोद्यतां च सावित्रीं सखि ! संहर रोषं संस्तुतमतयोऽपि जात्यैव द्विजन्मानो माननीया इत्यभिदधाना सरस्वत्येनां न्यवारयत् ।

अथ तां तथा शप्तां सरस्वतीं दृष्ट्वा पितामहः कमलोत्पत्तिलग्नमृणालसूत्रामिव धवलयज्ञोपवीतिनीं तनुमुद्वहन्नुन्नच्छदच्छाङ्गुलीयकमरकतमयूखलताकलापेन त्रिभुवनोपप्लवप्रशमनकुशापीडधारिणेव दक्षिणेन करेण निवार्य शापकलकलमतिविमर्ददीर्घैर्भाविकृतयुगारम्भसूत्रपातमिव दिक्षु विक्षिपन् दशनकिरणैः सरस्वतीप्रस्थानमङ्गलपटहेनेव पूरयन्नाशाः स्वरेण सधीरमुवाच ।

ब्रह्मन्न खलु साधुसेवितोऽयं पन्थाः । येनाऽसि प्रवृत्तः निहन्तुमेषु पुरस्तादुद्दामप्रहतेन्द्रियवाजिसमुत्थापितं रजः कलुषयति दृष्टिमनक्षजिताम् । कियद्दूरं वा चक्षुरीक्षते । विशुद्धया धिया पश्यन्ति कृतबुद्धयः सर्वानसतः सतोवा निसर्गविरोधिनी चेयं पयःपावकयोरिव एकत्र धर्मक्रोधयोर्वृत्तिः । आलोकमपहाय कथं तमसि निमज्जसि । क्षमा हि मूलं सर्वतपसाम् । परदोषदर्शनदक्षा दृष्टिरिव कुपिता न ते बुद्धिरात्मनो दोषान् पश्यति । क्व महातपोभार-

वैषयिकता क्व पुरोभागित्वम्। अतिरोषणश्चक्षुष्मानपि अन्ध- एवाजनि। नहि खलु कोपकलुषिता विमृशति मतिः कर्तव्य- मकर्तव्यं वा; कुपितस्य हि प्रथमान्धकारिणी भवति विद्या ततो भ्रूकुटीः। आदाविन्द्रियाणि रागः समास्कन्दति चरमं चक्षुः। आरम्भे तपोगलति पश्चात् स्वेदसलिलं पूर्वमयशः स्फुरति अनन्तरमधरः। कथञ्च ते विषपादपस्येव लोकविनाशाय वल्कलानि जातानि। असुचिता खल्वस्य मुनिवेषस्य हारयष्टिरिव वृत्तमुक्ता चित्तवृत्तिः। शैलूष इव वृथा वहसि कृत्रिमोपशमम्। शून्येन चेतसा कल्पं तपसः स्वल्पमपि न पश्यामि ते कुशलं जातम्। अनेनापि लघिम्ना चाद्याप्युपर्येव प्लवसे ज्ञानोदन्वतः। न खल्वेडमूकाश्च एडा जडा वा सर्वं एते महर्षयः। रोषदोष- निषेव्ये स्वहृदये निग्राह्ये किमर्थमसि निगृहीतवाननागसं सरस्वतीम्।

एतानि तान्यात्मस्खलितवैलक्ष्याणि। यैर्याति वाच्यताम- विदग्धो जनः। इत्युक्त्वा पुनराह। भद्रे! सरस्वति! मागा विषादम्। एषा त्वामनुयास्यति सावित्री। विनोदयि- ष्यति चास्मद्विरहितां त्वाम्। आत्मजमुखकमलावलोकनाव- धिश्च ते शापोऽयं भविष्यतीत्यभिधाय विसर्जितसुरासुरमुनि- मण्डलः ससम्भ्रमोपहृतनारदस्कन्धविन्यस्तहस्तः समुचिताह्नि- ककरणायोदतिष्ठत्। सरस्वत्यपि शप्ता किञ्चिदधोमुखी कृष्ण- धवलशारां कृष्णाजिनलेखामिव तपसे दृष्टिमुरसि पातयन्ती सुरभिनिश्वासलग्नैः शापाक्षरैरिव षट्चरणकदम्बकैराकृष्य- माणा शोकशिथिलहस्ताधोमुखीभूतेनोपदिश्यमानमर्त्यलोका- वतरणमार्गेणेव नखमयूखजालकेन नूपुररवव्याहारहृते भ-

वनकलहंसकुले ब्रह्मलोकवासिमुनिहृदयैरिवानुगम्यमाना सह सावित्र्या गृहमगात् ।

अत्रान्तरे सरस्वत्यवतरणवार्त्तामिव कथयितु मवततार मध्यलोकमंशुमाली क्रमेण च मन्दायमाने मुकुलितबिसिनीविरहव्यसनविषण्णसारसि वासरे मधुमोदितकामिनीकोपकुटिलकटाक्षक्षिप्यमाण इव क्षेपीयः क्षितिधरशिखरमवतरति तरुणकरकपिलपललोहिते लोकैकचक्षुषि भगवति सवितरि प्रस्तुतमहिष्युधः क्षरत्क्षीरधाराधवलितेष्वासन्नचन्द्रोदयोद्दामक्षीरोदक्षालितेष्विव दिव्याश्रमोपशल्येष्वपराह्णप्रचारप्रचलिते चामरिणीवामीकरतटताडनरटितरदने रदति सुरस्रवन्तीरोधांसि स्वैरमैरावते प्रवृत्तानेकविद्याधराभिसारिकासहस्रवरणालक्तकरसानुलिप्त इव प्रकटयति पाटलतां तारापथे तारापथप्रस्थितसिद्धदत्तदिनकरास्तमयार्घ्यापवर्जिते रञ्जितककुभि कुसुम्भभासि स्रवति पिनाकिप्रणति मुदितसन्ध्यास्वेद इव रक्तचन्दनद्रवे वन्दारुमुनिवृन्दारकवृन्दवध्यमानसन्ध्याञ्जलिवने ब्रह्मोत्पत्तिकमलश्रेवासमागतसकलकमलाकर इव राजति ब्रह्मलोके समुच्चारिततृतीयसवनब्रह्मणि ब्रह्मणि ज्वलितवैतानज्वलनज्वालाजटालाजिरेष्वारब्धधर्मसाधनशिबिरनीराजनेष्विव सप्तर्षिमन्दिरेष्वघमर्षणमुषितकिल्बिषगदोल्लाघलघुपूपतिष्ठमान सन्ध्योपासनासीनतपस्विपङ्क्तिपूतपुलिने प्लवमानपद्मयोनियानहंसदन्तुरोर्मिणि मन्दाकिनीजले जलदेवतापत्रे पतत्रिरथकुलकलत्रान्तःपुरसौधे निजमधुरसामोदिनि मधुकृतमधुपमुदि मुमुदिषमाणे कुमुदवने दिवसावसानव्यात्तामरसमधुरससपीतिव्रते सुषुप्सति च-

दुमृणालकाण्डकण्टककण्डूयनकुण्डलितकन्धरे धुतपक्षराजिवीजितराजीवरजसि राजहंसयूथे तटलताकुसुमधूलीधूसरितसरिति सिद्धपुरपुरन्ध्रीधम्मिल्लमल्लिकागन्धग्राहिणि सायन्तने तनीयसि निशानिश्वासनिभे नभस्वति स्वपति सङ्कोचदच्छदुच्छके सरकोटिसङ्कटकुशेशयकोशकटीकुटिलशायिनि षट्चरणचक्रे नृत्तोद्धूतधूर्जटिजटाटविकुटजकड्मलनिभे नभस्थलं स्तबकयति तारागणे सन्ध्यानुबन्धताताम्रे परिणमत्तालफलत्विषि कालमेदुरे मेदिनीं निमीलयति नववयसि तमसि तरुणतरतिमिरपटलपाटनपटीयसि यामिनीकर्णपूरचम्पकलिकाकदम्बके प्रदीपप्रकरे प्रतनुतुहिनकिरणालोकपाटले श्यामलनीलनीरमुच्यमानकालिन्दीकुलबालपुलिनायमाने शातक्रतवे क्षरयति तिमिरमाशामुखे स्वमुचि मेचकितविकचकुवलयसरसि शशधरकरनिकरकलग्रहाविलेपभूयमाने मानिनीमनसीव शर्वरीचिकुरचये चाषत्विषि तमसि उदिते भगवत्युदयगिरितटनिर्झरकुहरहरिखरनखामुखनिवहहेतिनिहितनिजहरिणगलगलितरुधिरचयनिचितमिव लोहितं वपुरुदयरागमधरमिव विभावरीवध्वा धारयति श्वेतभानौ अचलच्युतचन्द्रकान्तजलधाराधौतइव ध्वस्ते ध्वान्ते गोलोकगलितदुग्धविसरवाहिनिदन्तमयमकरमुखमहाप्रणालइव प्रवृत्ते पूरयितुमपयोनिधिमिन्दुमण्डले स्पष्टे प्रदोषसमये सावित्री शून्यहृदयामिव किमपि ध्यायन्तीं सास्रां सरस्वतीमवादीत्।

सखि! त्रिभुवनोपदेशदानदक्षायास्ते पुरो जिह्वा जिह्रेति मे जल्पन्ती, जानास्येव या दुर्वस्था विसंष्ठुला गुणवत्यपि जने दुर्जनइव निर्दाक्षिण्या दैवस्य वामा वृत्तयः। क्षणभ-

ङ्गिन्यो नातिक्रमणीयाः। निष्कारणानि कारणकणिकापि मनस्विनो मानसमुद्रेजयति सहृशजनादावदन्ती। अनवरतनयनजलधारासिच्यमानस्तरुरिव विपल्लवोऽपि सहस्रधा प्ररोहति सुकुमारञ्जनं सन्तानः। परमाणवोऽपि मालतीकुसुममिव म्लानिं मानयन्ति महतां उपरि निपतन्नणुरपि तृणमिव करिणां क्लेशः कदर्थनायालम्। सहजस्नेहपाशग्रन्थिबन्धनाश्च बान्धवभूता दुस्त्यजा जन्मभूमयः दारयति दारुणः क्रकचपात इव हृदयं संस्तुतजनविरहः। नार्हस्येवं भवितुम्। अभूमिः खल्वसि दुःखक्ष्वेडाङ्कुरप्रभावानाम्।

अपिच। पुराकृते हि कर्मण्यशुभे शुभं वा फलकृतिभूयिष्ठा तदिष्टे ष्टतस्य कोवावसरो विविदिषुः शुचाम्। इदन्तु ते त्रिभुवनमङ्गलमङ्गलभूताः कथमिवाननमपवित्रयन्त्यश्रुबिन्दवः। तदलमनया कथया। कथम्भूतो भागमलङ्कर्तुमिच्छसि कस्मिन्नवतितीर्षति पुण्यभाजि प्रदेशे ते हृदयम्। कानि वा तीर्थान्यनुगृहीतुमभिलषसि केषु वारण्येषु तपोधनधामसु तपस्यन्ती स्थातुमभिवाञ्छसि। सज्जोऽयमनुसरणचतुरः सहपांसुक्रीडापरिचयपेशलः प्रेयान् सखीजनः। कृतचिन्तितलावतरणसङ्कल्पाऽनन्यशरणाद्य प्रभृति प्रपद्यस्व मनसा वचसा क्रिययाच सर्वविद्याविधातारं धातारं स्वश्रेयसाय स्वचरणरजःपवित्रितत्रिदशासुरमौलिं सुधासूतिकलिका कल्पितावतंसकं देवं त्रिभुवनगुरुं त्र्यम्बकमम्बिकापतिम्। अल्पीयसैव कालेन स ते शोकविरतिं करिष्यतीत्येव। मुक्ताफलधवललोचनजलजवा सरस्वती प्रत्यवादीत्। सखि! त्वया सह

विचरन्त्या न मे काचिदपि पीडामुत्पादयिष्यति । ब्रह्मलोकविरहः शापशोको वा केवलं कमलासनसेवासुखमार्द्रयति मे हृदयम् । अपि च त्वमेव वेत्सि भुवि धर्मसाधनानि सर्वयोगयोग्यानि स्थातुं स्थानानीत्यभिधाय विरराम ।

तया तया कोपनीयमानप्रजागरा चोन्मीलितलोचनैव तां निशामनयत् । अपरेद्युरुदिते त्रिभुवनशिखरे तुरङ्गमुखखखाखायित खरखलीनकर्षणक्षतक्षरत्क्षतजेनेव पाटलितवपुषि उदयाचलशिखरचूडामणौ जरत्कृकवाकुचूडारुणेऽरुणपुरःसरे विरोचने रोचमाने नातिदूरवर्तिपितामहविमानहंसपालः पर्यटन् परवक्त्रमुच्चैरगायत् ॥

तरलयसि दृशं किमुत्सुकामकलुषमानसवासलालिते ।
अवतर कलहंसि ! वापिकां पुनरपि यास्यसि पङ्कजालयम् ॥

एतत् श्रुत्वा सरस्वत्यप्यचिन्तयत् । अहमिवानेन पर्यनुयुक्ता भवनमानयामि मुनेर्वचनम् । इत्युत्थाय कृतक्षितितलावतरणसङ्कल्पा परित्यज्य वियोगविक्लवं सपरिजनं ज्ञातिवर्गमपरिगणय्य त्रिःप्रदक्षिणीकृत्य चतुर्मुखं कथमप्यनुनयन्ती निवर्तितानुयायिव्रतीव्राता ब्रह्मलोकतः सावित्रीद्वितीया निर्जगाम ।

ततः क्रमेण ध्रुतपदप्रवृत्तां धर्मधेनुमिवाधोधावमानधवलपयोधरामुद्धुरध्वनिमन्तकान्तकमौलिमालतीमालिका मालीयमान वालखिल्यवृन्दरोधः समवन्ती शीततारवत्रुत्तरं गलगलिततारकान्तापसवितीर्णतिलोदकपुलिनामाप्लावनपूतपितामहपातितपिष्टपिण्डपाण्डुरितपारां पर्यन्तसुखसुप्तसप्तर्षिकुशशयनसूचितसूर्यग्रहणसूतकोपवासामाचमनशुचि-

शचीपतिमुच्यमानशिवार्चनकुसुमसारां शिवपुरपतितनिर्मा-
ल्यमन्दारदामकामनादरदारितमन्दरदरिद्रपदमनेकनाकना-
यकनिकायकामिनीकुचकलशलुलितविग्रहाम् गृह्यावस्खलि-
तमुखरवक्रस्रोतसं सुषुम्णास्रुतशशिसुधाशीकरस्तबकतारकि-
ततीरां भीषणाग्निकार्यधूमधूसरितसैकतां सिद्धविरचि-
तवालुकालिङ्गलङ्घनत्रासविद्रुतविद्याधरां निर्मोकपट्टिकामिव ग-
गनोरगस्य लीलालाटिकामिव त्रिविष्टपस्य विक्रयवीथी-
मिव पुण्यपण्यसञ्चयस्य दत्तार्गलामिव नरकनगरस्यांशुको-
ष्णीषपट्टिकामिव सुमेरोर्दुकूलकदलिकामिव मेखलां कुल-
सरस्य पद्धतिमिवापवर्गस्य नेमिमिव कृतयुगचक्रस्य सप्त-
सागरमहिषीं मन्दाकिनीमनुसरन्ती मर्त्यलोकमवातरत् ।

अपश्यच्चाम्बरस्यैव हारमिव वरुणस्यातपत्रनिकर-
मिव चन्द्राचलस्य शशिमणिनिष्यन्दमिव विन्ध्यस्य कर्पूर-
द्रुमद्रवप्रवाहमिव दण्डकारण्यस्य लावण्यरसप्रस्रवणमिव
दिशां स्फटिकशिलापट्टशयनमिवाम्बरश्रियः स्वच्छशिशिर-
वारिपूर्णं भगवतः पितामहस्यापत्यं हिरण्यबाहुनामानं महा-
नदं यं जनाः शोण इति कथयन्ति दृष्ट्वा च तदीयरामणीयक-
हृतहृदया तस्यैव तीरवासमरोचयत् उवाच च सावित्रीम्
सखि ! मधुरमयूरविरुतयः कुसुमपांसुपटलसिकतिल-
तरुलताः पुष्पपरिमलमत्तमधुपश्रेणीवीणारणितरमणीया
रमयन्ति मां मन्दाकिनीद्युतेरस्य महानदस्योपकण्ठभूमयः
पक्षपाति च मे मनः स्थातुमत्रैवेति । अभिनन्दितवचना
च तथेति तया पश्चिमे तीरे वासमरोचयत् । एकस्मिंश्च शि-
लातलसनाथे तरुलतामण्डपे गृहबुद्धिं बबन्ध । तत्र च वि-

श्रान्तापि नातिचिरादुत्थाय सावित्र्या सार्द्धमुच्चितार्चनकुसुमा वसतौ पुलिनपृष्ठप्रतिष्ठापितशिवलिङ्गा भक्त्या परमया पञ्चब्रह्मपुरःसरां सम्यक् मुद्रां बबन्ध। विहितपरिकरा च अविगीतगर्हामवनिपवनगगनतपनतुहिनकिरणदहनसलिलयजमानमयीरत्वमष्टावपि मूर्त्तीर्ध्यायन्ती लतयोपनतेन फलमूलादिना अमृतरसमप्यतिशिशयिषमाणेन तेन च स्वादुना शिशिरेण शोणवारिणा शरीरस्थितिमकरोत्। अतिवाहितदिवसा च तस्मिन्नेव लतामण्डपे शिलातले कल्पितपल्लवशयना सुष्वाप। अन्येद्युरनेनैव नक्तन्दिवमत्यवाहयत्। एवमतिक्रामति काले गच्छत्सु दिवसेषु कदाचिद्यामामात्रमिव गते रवौ इतरस्यान्दिशि प्रतिशब्दपूरितगह्वरं गम्भीरतरं तुरङ्गमह्रेषितोद्यममशृणोत्। उपजातकुतूहला च निर्गत्य लतामण्डपाद्विलोकयन्ती विकचकेतकगर्भपत्रपाण्डरं रजःसङ्घातन्नातिदवीयसि प्रदेशे संमुखमापन्नमपश्यत्। क्रमेण च सामीप्योपजायमानाभिव्यक्तिनि तस्मिन्नेव महति रजसि शफरोदरधूसरे पयसि मकरचक्रमिव प्लवमानं पुरः प्रधावमानेन प्रलम्बकुटिलकचपल्लवघटितललाटचूलिकेन धवलदन्तपत्रद्युतिहसितकपोलभित्तिना पिनद्धकृष्णागुरुपङ्कच्छुरणकषायकञ्चुकेनोत्तरीयकृतशिरोवेष्टनेन वामप्रकोष्ठनिविष्टहाटककटकेन द्विगुणपट्टिकागाढग्रन्थिग्रथितासिधेनुना सततव्यायामकृशकर्कशशरीरेण वनहरिणयूथेनेव मुहुर्मुहुरङ्घ्रियमाणेन लङ्घितसमविषमावटतटविटपेन कोणधारिणा कृपाणपाणिना च सेवागृहीतविविधवनकुसुमफलमूलेन चलचल याहि यच्छप-

सर्पापसर्प पुरः प्रयच्छ पन्थानमिति अनवरतकृतकलकलेन युवप्रायेण सहस्रमात्रेण पदातिजनेन सबाधमग्रवृन्दं ददर्श ।

मध्ये च तस्य सार्द्धं चन्द्रेण मुक्ताफलजालिना विविधरत्नखण्डखचितेन शङ्खक्षीरफेनपिण्डपाण्डरेण क्षीरोदेनेव स्वयं लक्ष्मीं दातुमागतेन गगनगतेनातपत्रेण कृतच्छायमच्छाच्छेनाभरणदीधितीनान्निवहेन दिशामिव दर्शनानुरागलग्नेन चक्रबालेनानुगम्यमानमानितम्बावलम्बिन्या मालत्याः शेखरस्रजः सकलभुवनविजयार्जितया रूपपताकयैव विराजमानम् समुत्सर्पिभिः शिखण्डकपद्मरागमणेररुणैरंशुजालैरदृश्यमानवनदेवताविधृतैर्बालपल्लवैरिव प्रमृज्यमानमार्गरेणुमरुणवपुषं वकुलमुकुलमालामण्डनमनोहारिणा कुटिलकुन्तलस्तवमालिना मौलिना निमीलितातपमापिबन्तमिव दिवसं पशुपतिमुकुटस्य गाङ्गं द्वितीयशकलघटितस्येव सहजलक्ष्मीसमालिङ्गितस्य ललाटपट्टस्य मनःशिलापङ्कपिङ्गलेन लावण्येनेव लिम्पन्तमिवान्तरीक्षं हि नवयौवनावष्टम्भप्रगल्भदृष्टिपातदृणीकृतत्रिभुवनस्य चक्षुषः प्रथिम्ना विकचकुवलयकुमुदकमलसरःसहस्रच्छादितदशदिशं शरत्समयसम्पदमिव प्रवर्तयन्तायतनयनदीर्घसीमन्तसेतुबन्धनललाटपट्टिकाशशिमणिशिलातलगलितेन कान्तिसलिलस्रोतसेव द्राघीयसा घोणावंशेन विराजमानमतिसुरभिसहकारतरु कालकर्पूरलवङ्गपारिजातपरिमललुब्धमत्तमधुकरकोलाहलमुखरितेन मुखेन सनन्दनवनं वसन्तमिव वसन्तमासन्नसुहृत्परिहासम्भाषणेन

उत्तानमुखमुग्धहसितैर्दशनज्योत्स्नास्नपितैरिन्दुमुखैः पुनर्न-
भसि सञ्चारिणमिन्दुमण्डलमिव कल्पयन्तं कदम्बमुकुलस्थूल-
मुक्ताफलयुगलमध्याध्यासितमरकतस्य त्रिकण्टककर्णाभरणस्य
प्रेङ्खतः प्रभया समुत्सर्पन्त्या सकुसुमहरितकुन्तपल्लवकर्णा-
वतंसकृत्यमिवोपपादयमानमामोदिमृगमदपङ्कलिखितमकर-
मुखपत्रभङ्गभास्वरं भुजयुगलमुद्दाममकराक्रान्तशिखरमिव म-
करकेतुकेतुदण्डद्वयं दधानं धवलब्रह्मसूत्रसीमन्तितं सागर-
मथनसामर्षगङ्गास्रोतः सदानितमिव मन्दरं देहमुद्वहन्तं
कर्पूरक्षोदमुष्टिच्छुरणपांसुलेन युवतिजनकुचचक्रवाकमिथुन-
विपुलपुलिनेन नारस्थलेन स्थूलभुजामपुञ्जीकृतं पुनर्वि-
स्तारयन्तमिव दिक्चक्रं पुरस्तादीषदधोनाभिनिहितैककौ-
णकमनीयेन पृष्ठतः कक्षाधिक्षिप्तपल्लवेनोभयतः सवलनमक-
टितोरुविभागेन हारितहरितेन निबिडनिपीडितेनाधरवा-
ससा विभक्ततनुतरमध्यभागमनवरतव्यायामोपचितमांसबन्धवि-
कटकरमुखमग्नं जानुभ्यां विशालवक्षःस्थलोपलवेदिकोत्तम्भन-
शिलास्तम्भाभ्यां चारुचन्दनस्थासकस्थूलतरकान्तिश्यामूरुदण्डा-
भ्यामपहसन्तमिवैरावतकरायाममतिभरभरितोरुभागभारवह-
नखेदेनेव तनुतरं जङ्घाकाण्डं वहन्तं कल्पपादपपल्लवपाटल-
स्योभयपार्श्वविलम्बिनः पदद्वयस्य दोलायमानैर्नखमयूख-
जालकैरखण्डनचामरमालामिव रचयन्तमभिमुखमुच्चैरुदञ्च-
द्भिरतिचिरमुपरिविश्रान्त्यर्थिभिरिव वल्गनविकटं पतद्भिः
खुरैः खण्डितभुवि प्रतिक्षणं दशनग्रहविमुक्तखण्डखण्डायित-
खलीने दीर्घघोणालीननालिके ललाटपट्टिकालुलितचामीकर-
चक्रे शिञ्जानशातकुम्भदामशोभिनि मनोरंहसि गोलाङ्गूलक-

पोलकान्तिरोमणि नीलसिन्दुवारवर्णे वाजिनि समारूढमुमयत्र पर्य्याणपट्टाश्लिष्टहस्ताभ्यामासन्नपरिचारिकाभ्यां दोधूयमान-धवलचामरीकायुगलमग्रतः पठतो वन्दिजनस्य सुभाषितमुत्क-ण्टकितकपोलफलकेन लग्नोत्पलकेसरशकलेनेव मुखशशिना-भावयन्तं मनङ्गयुगावतारमिव दर्शयन्तं चन्द्रमयीमिव सृष्टि-मुत्पादयन्तं विलासमयमिव जीवलोकं जनयन्तम् अनुराग-मयमिव सर्गान्तरमानयन्तं शृङ्गारमयमिव दिवसमापादयन्तं रामराज्यमिव प्रवर्त्तयन्तमाकर्षाञ्जनमिव चक्षुषोर्वशीकरण-मन्त्रमिव मनसः स्वास्थ्यचूर्णमिवेन्द्रियाणां सन्तोषमिव कौ-तुकस्य सिद्धियोगमिव सौभाग्यस्य पुनर्जन्मदिवसमिव मन्मथस्य रसायनमिव यौवनस्यैकराज्यमिव रामणीयकस्य कीर्त्तिस्तम्भ-मिव रूपस्य कुलकोशमिव लावण्यस्य पुण्यकर्मपरिणाममिव संसारस्य प्रथमाङ्कुरमिव कान्तेः सर्गाभ्यासफलमिव प्रजापतेः प्रतापमिव विभ्रमस्य यशसः प्रवाहमिव वैदग्ध्यस्याष्टादशवर्ष-देशीयं कञ्चिद्युवानमद्राक्षीत् ।

पार्श्वे च तस्य द्वितीयं संसक्ततुरगं परं प्रांशुमुत्तप्ततपनी-यस्तम्भावदातम् परिणतवयसमपि व्यायामवलीयसन्नीचनख-श्मश्रुकेशमशुक्ति खलतिमिषत् तुन्दिलमनुल्बणोदारवेषतया जरामपि विनयमिव शिक्षयन्तम्, गुणानामपि गौरवमिवापा-दयन्तम्, महानुभावतामपि शिष्यतामिव जनयन्तमाचार्य्य-स्याप्याचार्य्यमिव कुर्व्वाणं वलक्षवारवाणधारिणं लसत्तनुदु-कूलपट्टिकापरिश्लिष्टमौलिं पुरुषम् ।

अथ स युवा पुरोयायिनां यथा दर्शनं प्रतिनिवृत्य विस्मयमानमनसां कथयतां पदातीनां सकाशादुपलभ्य-

दिव्याकृतितत्कन्यकायुगलमुपजातकुतूहलः प्रहर्षतुरगो दि-
दृक्षुस्तं लतामण्डपोद्देशमाजगाम। दूरादेव तुरगादवततार।
निवारितपरिजनश्च तेन द्वितीयेन साधुना सह चरणाभ्यां
सविनयमुपससर्प। कृतोपसंग्रहणौ च तौ सावित्री समं सर-
स्वत्या किसलयासनदानादिना कुसुमफलार्घ्यविधानेन वन-
वासोचितेनातिथ्येन यथाक्रममुपजग्राह अनुकूलयाञ्चकार।
आसीनयोश्च तयोरासीना नातिचिरमिव स्थित्वा तद्द्वितीयं
प्रवयसमुद्दिश्याब्रवीत् आर्य्य! सहजलज्जाघनस्य प्रमदाजनस्य
प्रथमाभिभाषणं शालीनता। विशेषतो वनमृगीमुग्धस्य कु-
मारीजनस्य, केवलमियमालोकनशतार्थाय चक्षुषे स्पृहयन्ती
प्रेरयत्युदन्तश्रवणकुतूहलिनी श्रोत्रवृत्तिः। प्रथमदर्शने चो-
पायनमिवोपजनयति सज्जनः प्रणयम्। अप्रगल्भमपि जनं
प्रभवता प्रश्रयेणारोपितं मनोमध्विव वाचालयति। अयत्नेनै-
वातिनम्रे साधौ धनुषीव गुणाः पराङ्कोटिमारोहति विश्रम्भः।
जनयन्ति च विस्मयमतिधीरधियामप्यदृष्टपूर्वा जगति दृश्य-
मानाः सुकृतसातिशयाः। यतस्त्रिभुवनाभिभावि रूपमिदमस्य
महानुभावस्य कुमारस्य। सौजन्यपरतन्त्रा चेयं देवतानां शुभ-
स्यातिभद्रता कारयति कथान्तौ। ननु युवतिजनसहोत्था तर-
लता। तत्कथय यात्रागमनेनापुण्यभाक् कतमोविक्रमजृम्भि-
तविरहव्यथया शून्यतान्नीतोदेशः। क्व वागन्तव्यं कोवायमप-
हृतहरकण्ठाराहङ्कारोऽपर इवानन्यजो युवा। किं नाम्नो-
दास्य समृद्धतपसः पितुरयमन्ववर्षी कौस्तुभमणिरिव हरेर्हृ-
दयमाह्लादयति। का वास्य त्रिभुवननमस्या प्रभातसन्ध्येव
महत स्तेजसो जननी जननी। कानि वास्य पुण्यभाञ्जि भज-

न्त्याख्यामक्षराणि । आर्ये ! परिज्ञानेऽप्ययमेव क्रमः कौतुका-
नुरोधिनी हृदयस्य । इत्युक्तवत्यां च तस्यामसौ प्रकटितप्रश्रयः
प्रत्यवादीत् ।

आयुष्मति ! सतामभिष्वङ्गवदान्यकुलविद्या न केवल-
माननं हृदयमपि ते चन्द्रमयमिव सुधाकरशीतलैराह्लादयति
वचोभिः । सौजन्यजन्मभूमयो भूयसा शुभेन कर्मणा शिल्प-
कला इव भवादृश्यो दृश्यन्ते । दूरे तावदन्योन्यस्यालापाः अभि-
जातैः सह दृश्योपमश्रीभूता महतीं तुष्टिमारोपयन्ति । श्रूयता-
मेष खलु भूषणं भार्गववंशस्य भगवतो भूर्भुवःस्वस्त्रितयतिलकस्या
दभ्रप्रभावस्तम्भितजम्भारिभुजस्तम्भस्य सुरासुरमुकुटमणिशि-
लातलशयनदुर्ललितपादपङ्कजस्य निजतेजःप्रसरप्लुष्टपुलोम्नश्च्या-
वनस्य बहिर्वर्तिजीवितं दधीचो नाम तनयः । जननी चास्य
जितजगतोऽनेकपार्थिवसहस्रानुयातस्य शर्यातस्य सुता
राजपुत्री त्रिभुवनकन्यारत्नं सुकन्यका नाम । तां खलु देवीं त्रि-
मूर्त्तीं विदित्वा वैजनने मासि प्रसवाय पिता पत्युः पार्श्वात्
स्वगृहमानाययत् । असूत च तत्र सा देवी दीर्घायुषमेनम् ।
अनेहसावर्धत च तत्रैवायमानन्दितज्ञातिवर्गो बालस्तारकारा-
ज इव राजीवलोचनो राजगृहे भर्तृगृहं गच्छन्त्यामपि मातरि
नासेचनकदर्शनमिममामुञ्चन्मातामहो मनोविनोदनमपारम् ।
अशिक्षत चायं तस्मिन्नेव सर्वा विद्याः सकलाः कलाश्च कालेनो-
पारूढयौवनमालोक्याहमिवासावप्यनुभवतु मुखकमलावलो-
कानन्दमस्येति मातामहः । कथं कथमप्येनं पितुरन्तिकमधुना
व्यसर्जयत् । मामपि तस्यैव देवस्य सुगृहीतनाम्नः शर्यातस्य

राज्ञ आज्ञाकारिणं विकुक्षिनामानं भृत्यपरमाणुमवधारयतु भवती।

पितुः पादमूलमायान्तं मया सह सम्मुखमकरोत् स्वामी। तद्धि नः कुलक्रमागतं राजकुलम्। उत्तमानां चिरन्तनतां जनयत्यनुजीविन्यपि जने कियन्मात्रमिव मन्दादरम्। अक्षीणः खलु दाक्षिण्ये शोकोमहताम्। इतश्च गव्यूतिमात्र एव पारे शोणानान्तस्य भगवतश्च्यवनस्य स्वनाम्ना नियमितच्यवनन्नाम चैत्ररथकल्पं काननं निवासः। तदवधिरेव नौयात्रा। यदि वोऽगृहीतक्षणदाक्षिण्यमनवहेलं वा हृदयमस्माकमुपरिभूमिर्वा प्रसादानामयञ्जनः श्रवणार्हो वा ततो न विमाननीयोऽयत्नः प्रथमप्रणायः कुतूहलिनो हृदयस्य। वयमपि शुश्रूषवो प्रथमहृत्तान्तमायुष्मत्योः। नेयमाकृतिर्दिव्यतां व्यभिचरति। गोत्रनामनी श्रोतुमभिलषति नो हृदयम्। तत्कथयकतमो वंशः स्पृहणीयतान्नीतस्तत्रभवत्या जन्मना?। का चेयं मातृभवती भवत्याः समवाय इव विरोधिनां पदार्थानाम्। तथा हि सन्निहितबालान्धकारा भास्वन्मूर्त्तिश्च। पुण्डरीकमुखी हरिणलोचना च। बालातपप्रभाधरा कुमुदहासिनी च। समदहंसस्वना समुन्नतपयोधरा च। कमलकोमलकरा हिमगिरिशिलापृथुनितम्बा च। करभोरुर्विलम्बितगामिनीच। अमुक्तकुमारभावा स्निग्धतारका चेति।

सात्ववादीत् आर्य! श्रोष्यसि कालेन भूयसोदिवसानत्र स्थातुमभिलषति नो हृदयमल्पीयश्चायमध्वनः परिचय एव प्रकटीकरिष्यति। आर्येण न विस्मरणीयोऽयमनुषङ्गदृष्टोजनः इत्यभिधाय तूष्णीमभूत्। दधीचस्तु नवाम्भोभारभासाम्भो-

धरध्वाननिभया भारत्या नर्तयन्निव वनलताभवनभाजो भुजगभुजः सधीरमुवाच। आर्ये! करिष्यति प्रसादमाराध्यमानं पश्चामस्तातम्। उत्तिष्ठ व्रजाम इति। तथेति तेन चाभ्यनुज्ञातः शनैरुत्थाय कृतनमस्कृतिरुच्चचाल।

तुरगाधिरूढं तमग्रगान्तं सरस्वती सुचिरमुत्तम्भितपक्ष्मणा निश्चलतारकेण लिखितेनेव चक्षुषा व्यलोकयत्। उत्तीर्य शोणमचिरेणैव कालेन दधीचः चतुराश्रमपदं जगाम।

गते च तस्मिन् सा तामेव दिशं विलोकयन्ती सुचिरमतिष्ठत्। कृच्छ्रा दिवसं जहार। दिवसमथ मुहूर्त्तमिव स्मृत्वा स्मृत्वातुलव्य तां रूपसम्पदं पुनः पुनर्व्यस्मयतास्या हृदयम्। भूयोऽपि चक्षुराचकाङ्क्षे तद्दर्शनम्। अवशेन केनाप्यनीयत तामेव दिशं दृष्टिः। अप्रहितमपि मनस्तेनैव सार्द्धमगात्। अजायत च नवपल्लव इव लतायाः कुतोऽप्यनुरागश्चेतसि। सालसेव शून्येव सनिद्रेव दिवसमनयत्। अस्तमुपयाति च प्रत्यक्पर्यस्तमण्डले लाङ्गलिकस्तबकसदृशत्विषि कमलिनीकामुके करीरः शिरःशोणशोचिषे सवितरि त्रयीमयेतेजसि तरुणतरतमालश्यामले मलिनयति व्योमव्यापिनि तिमिरसञ्चये समचरत्। सिद्धसुन्दरीनूपुररवानुसारिणि मन्दमन्दाकिनीहंस इव समुत्पतति शशिनि गगनतलकृतसन्ध्याप्रणामा निशामुख एव निपत्य विमुक्ताङ्गी पल्लवशयने तस्थौ। सावित्र्यपि कृत्वा यथाक्रियमाणं सायन्तनक्रियाकलापं समुचिते शयनकाले किसलयशयनमभजत। जातनिद्रा च सुष्वाप। इतरा तु मुहुर्मुहुरङ्गवलनैर्विलुलित-

किसलयशयनीया निमीलितनयनापि नालभत निद्राम्। अचिन्तयच्च मर्त्यलोकः खलु सर्वलोकानामुपरि यस्मिन्नेवंविधानि त्रिभुवनभूषणानि भवन्ति सकलगुणग्रामगुरूणि रत्नानि। तथाहि। तस्य मुखलावण्यनिर्झरिन्दुः। तस्य चक्षुषोर्विक्षेपाः कुमुदकुवलयकमलाकराः। तस्य चाधरमणेर्दीधितयो विकसितबन्धूकवनराजयः। तस्य चाङ्गस्य परिभोगकरणमनङ्गः। धन्याः पुण्यभाञ्जि तानि चक्षूंषि चेतांसि वा यौवनानि वा स्त्रैणानि एषामसावविषयः। दर्शयता च तमन्यजन्मनि कृतेन मे फलितं धर्मेण का प्रतिपत्तिरिदानीम्। इति चिन्तयन्त्येव कथं कथमपि समुपजातनिद्राक्षणमशेत। सुप्तापि तमेव दीर्घलोचनं स्वप्ने ददर्श। स्वप्नान्तरितद्वितीयदर्शनाच्च कर्णाकृष्टकार्मुकेण मनसिजेन निर्दयमताड्यत। प्रतिबुद्धा च मदनेन मदनशराहताशास्य वार्तामिवोपलब्धुं रतिराजगाम। तथाहि।

ततः प्रभृति कुसुमधूलिधवलाभिर्लताभिरताडितापि वेदनामधत्त। मन्दमारुतविधूतैः कुसुमरजोभिरदूषितलोचनाप्यश्रुजलं मुमोच। हंसपक्षतालवृन्तचयविधूतैः शोणशीकरैरसिक्ताप्यार्द्रतिमगमत्। प्रेङ्खत्कादम्बमिथुनाभिरनुढाप्यघूर्णितवनकमलिनीकल्लोलदोलाभिर्विघटमाना चक्रवाकयुगलविरहदृष्टैरस्पृष्टापि श्यामतामाततान। विरहनिश्वासधूमैः पुष्पधूलीधूसरैरदृष्टापि व्याचेष्टत मधुकरगणैः। अथ गणरात्रापगमे निवर्तमानास्तेनैव पथा तं देशमागत्य निवारितपरिजनः छत्रधारद्वितीयो विकुक्षिर्डुढौके। सरस्वती तु तं दूरादेव सम्मुखमापतन्तं दृष्ट्वा ससम्भ्रममुत्थाय वनस्रगीवोद्ग्रीवा

विलोकयन्ती मार्गपरिश्रान्तं स्नपयन्तीव धवलितदशदिशा दृशा लतासनपरिग्रहन्तं सा सावित्री पप्रच्छ। आर्य्य! कच्चित् कुशली कुमार इति? सोऽब्रवीत् आयुष्मति! कुशली। स्मरति च भवत्योः। केवलममीषु दिवसेषु तनीयसीमिव तनुं विभर्ति। अविज्ञायमाननिमित्ताञ्च शून्यतामिव धत्ते। अयि! काल्यमागमिष्यत्येव मालतीतिनाम्ना वरवर्णिनी वार्त्तां वो विज्ञापयितुम्। उच्छ्वसितं हि सा कुमारस्येति। तच्छ्रुत्वा पुनरपि सावित्री समभ्यभाषत। अतिमहानुभावः खलु कुमारः येनैवमविज्ञायमाने चक्षुर्दृष्टेऽपि जने परिचयमाबध्नाति तस्य च गच्छतो यदृच्छया कथमप्यंशुकमिव मार्गलतायां मुहूर्त्तमस्मासु मनः समासक्तमासीत्।

अशून्यं हि सौजन्यमाभिजात्येन च स्वामिनः। अलसः खलु लोकः। यदेवं सुलभसौहार्द्दानि येन केनचिन्न क्रीतानि महतां मनांसि। सोऽयमौदार्य्यातिशयः कोऽपि महात्मनामितरजनदुर्लभः येनोपकरणीकुर्वन्ति त्रिभुवनमिति। विकुक्षिस्तु उच्चावचैरालापैः सुचिरमिव स्थित्वा यथाभिलषितं देशमासीत्।

अथापरेद्युरुदग्रद्युमणावुद्दामद्युतावभिद्रुततारके तिरस्कृतासिततामरसविकासव्यसनिनि सहस्रभानौ शोणमुत्तीर्य्यायाति तरलदेहप्रभावितानच्छलेनात्यच्छमसकलमिव शोणसलिलमानयति स्फुटितातिमुक्तकुसुमत्विषि स्तवकसटालेपहतिमृगपताविव गौरीतुरङ्गमे स्थितसलिलमुरोवद्धारोपितस्य तिर्य्यगुत्कण्ठिततुरगकण्ठायमाननूपुरयुगलपरिणतस्यातिबहलेन पिण्डालक्तकरसेन पल्लवितस्य कुङ्कुमपिञ्जरितपृष्ठस्य चरणयुगलस्य प्रसरद्भिरतिलोहितैः प्रभाप्रवाहैरभयतस्ताडम-

दोहदलोभागतानि किसलयितानि रक्ताशोकवनानीवाकर्ष-
न्ति सकलजीवलोकहृदयहरणाघोषणयेव रशनया शिञ्जान-
जघनस्थला धौतधवलनेत्रनिर्मितेन निर्मोकलघुतरेणाप्रप-
दीनेन कञ्चुकेन तिरोहिततनुलता कञ्चुकान्तरदृश्यमानैरास्ना-
नचन्दनधवलैरवयवैः स्वच्छसलिलाभ्यन्तरविभाव्यमानमृणाल-
काण्डेव सरसी कुसुम्भरागपाटलं पुलकबन्धचित्रं चण्डातकम-
न्तर्वटं स्फाटिकभूमिरिव रत्ननिधानमादधाना जघनस्थलेन
हारेणामलकीफलनिस्तुलमुक्ताफलेन स्फुरिता स्थूल-
ग्रहगणताराधारा द्यौरिव श्वेतजलधरपटलावृता कुचपूर्णकल-
शयोरुपरि रत्नप्रालम्बमालिकामरुणहरितकिरणां किस-
लयिनीम् कस्यापि पुण्यवतो हृदयप्रवेशवन्दनमालि-
कामिव बद्धां धारयन्तीं प्रकोष्ठनिविष्टस्यैकैकस्य प्रवाल-
कटकस्य मरकतवेदिकामनाथस्य भक्त्याऽरुणी स्तनदिगन्त-
राभिर्मयूखसंहतिभिः स्थूलकमलिनीभिरिव लक्ष्मीशङ्कया-
नुगम्यमाना बहलताम्बूलरागकृष्णिकान्धकारिणाधरपुटेन
मुखशशिनिपीतं ससन्ध्यारागं तिमिरमिव वमन्ती विक-
चनयनकुवलयवनकुतूहलनिलीनयालिकुलसंहत्या नीलांशु-
कजालकयेव निबद्धार्धवदना नीलीरागविहितनीलिम्ना शि-
खिगलच्छारिणा वामश्रवणाश्रयिणा दन्तपत्रेण कालमेघप-
ल्लवेन विद्युदिव विद्योतमाना बकुलफलानुसारिणीभिस्तिसृभि-
र्मुक्ताभिः कल्पितेन बालिकायुगलेनायोमुखालोकजलवर्षिणा
सिञ्चन्तीवातिकोमले भुजलते दक्षिणकर्णावतंसितया केतकी-
गर्भपलाशलेखया रजनीकरजिह्वालेखयेव लावण्यलोभेन
लोभ्यमानकपोलतलातमालपत्रलेन मृगमदामोदनिष्य-

न्दिना तिलकबिन्दुना मुद्रितमिव मनोभवसर्वस्वं मुद्वहन्ती मुखं ललाटरङ्गग्रासकस्य सीमन्तचुम्बिनश्चटुलललन्तिका-मणेरुद्रश्मिता घञ्चलेनांशुकेनेव कृतशिरोऽवगुण्ठना पृष्ठतः प्रेङ्खद्भिरनारतसंयमनशिथिलचूलिकाबन्धा नीलचामरावचूलिनी चूडामणिमकरिकासनाथेव मकरकेतुकेतुपताकाकुलदेवतेव चन्द्रमसः पुनः सञ्जीवनौषधीरिव पुष्पधन्वनो वेलेव रागसागरस्य ज्योत्स्नेव यौवनचन्द्रोदयस्य महानदीव रतिरसामृतस्य कुसुमोद्गतिरिव सुरतरोर्बाल्यविद्येव वैदग्ध्यस्य कौमुदीव कान्तेर्धृतिरिव धैर्य्यस्य गुरुशालेव गौरवस्य बीजभूमिरिव विनयानां गोष्ठीव गुणानां मनस्वितेव महानुभावताया स्तृप्तिरिव तारुण्यस्य कुवलयदलदामदीर्घलोचनया पाटलाधरदलया कुन्दकुटजस्फुटदशनया शिरीषमालासुकुमारभुजयुगलया वकुलसुरभिनिश्वासया चम्पकदलावदातया कुसुममय्येव ताम्बूलकरङ्कवाहिन्या महाप्रमाणाश्वतराधिरूढयानुगम्यमाना कतिपयपरिजनपरिकरा मालती समदृश्यत ।

दूरादेव दधीचप्रेमृणा सरस्वत्या तुलितेव मनोरथेनाकृष्टेव कुतूहलेन प्रत्युद्गतेवोत्कण्ठयान्तःप्रवेशितेव हृदयेन स्नपितेवानन्दाश्रुभिर्विलिप्तेव स्मितेन विजितेवोच्छ्वसितैराच्छादितेव चक्षुषाभ्यर्चितेव वदनपुण्डरीकेण सखीकृतेवाशया समीपमुपययौ अवतीर्य्य च तुरङ्गमाद्दूरावनतेन मूर्ध्ना प्रणाममकरोत् ।

आलिङ्गिता च ताभ्यां सविनय मुपाविशत् । सप्रश्रयं आषिता च पुण्यभाजमात्मानममन्यत अकथयच्च दधीच सन्दिष्टं शिरसि निहितेनाञ्जलिना नमस्कारम् अस्वलावाकारातः

प्रभृत्यशून्यतया तैस्तैरतिपेशलैरालापैः सावित्रीसरस्वत्यौ मनसि क्रमेण चानीते मध्यन्दिनसमये शोणमवतीर्णायां स्नातुं सावित्र्यां समुत्सारितपरिजना सा क्षतैव मालतीकुसुमप्रस्तारशयनीयमुपहृत्य सरस्वतीमाबभाषे । देवि ! विज्ञाप्यं किञ्चिदस्ति रहसि ।

अथ मुहूर्त्तमवधानदानेन प्रसादं क्रियमाणमिच्छामीति । सरस्वती तु दधीचसन्देशाशङ्किनी किं वियं वक्ष्यतीति करनखकिरणदन्तुरितमुद्भिद्यमानकुतूहलाङ्कुरनिकरमिव हृदयमुत्तरीयवल्कलैकदेशेन संच्छादयन्ती गलितावतंसपल्लवेन श्रोतुं श्रवणेन ध्यानेनेव शोभमानानवरतश्वाससन्दोहदोलायितां जीविताशामिवासन्नतरुलतामवलम्बमाना समुत्फुल्लस्य मुखशशिनो लावण्यप्रवाहेन शृङ्गाररसेनेव प्लावयन्ती सकलं जीवलोकं शयनकुसुमपरिमललग्नैर्मधुकरकदम्बकैर्मदनानलधूमश्यामलैर्मनोरथैरिव निर्गत्य मूर्त्तैरुत्क्षिप्यमाणा कुसुमशयनात् स्मरशरसञ्जरणी मन्दं मन्दमुदगात् ।

उपांशु कथयेति कपोलतलप्रतिबिम्बितांस्तां संज्ञया कर्णमूलमिव मालतीं प्रवेशयन्ती मधुरया गिरा सधीरमुवाच । मालति ! किमर्थमेव मभिदधासि । कोऽहमवधानदानस्य शरीरस्य प्राणानां वा सर्वस्याप्रार्थितोऽपि प्रभवत्येवातिपेशलश्चक्षुष्यो जनः । साका चिद्वा न भवसि । मे स्वसा सखी प्रणयिनी प्राणसमा च । नियुज्यतां यावतः कार्यस्य क्षमं क्षोदीयसो गरीयसो वा शरीरमिदम् । आश्रितं त्वयि मे हृदयम् । प्रीत्या प्रतिसरामि ते । व्याहरणु वरवर्णिनि ! विवक्षितमिति । सा

त्यवादीत्। देवि! जानास्येव माधुर्यं विषयाणां लोलुपतां चेन्द्रियग्रामस्य उन्मादिताञ्च यौवनस्य पारिप्लवताञ्च मनसां प्रख्यातैव सा त्वं देवि! यदैव दृष्टासि देवेन तत एवारभ्य तस्य कामो गुरुः चन्द्रमा जीवितेशः मलयमरुदुच्छ्वासहेतुः आधयो रन्तरङ्गस्थानेषु सन्तापः परमसुहृत् प्रजागर आप्तः मनोरथाः सर्वगताः निश्वासा विग्रहाग्रेसराः। मृत्युः पार्श्ववर्त्ती रणरणकः सञ्चारकः। सङ्कल्पा बुद्ध्युपदेशदृष्ट्वाः। किं विज्ञापयामि। अनुरूपो देवो देव्यादृत्यात्मसम्भावनाशीलत्वामिति। प्रक्रमविरुद्धं धीरहृत्यवस्थाविपरीतम्। सुभग इति त्वदायतम्। स्थिरप्रकृति रितिनिपुणोपन्यासः। जानासि सेवितुमिति अस्वामिभावोचितं। इच्छसि दासतां मरणात् कर्तुमिति धूर्त्तालापः। भुवनस्वामिनी भवेत्युपप्रलोभनम्। पुण्यभागिनी भज तादृशमिति स्वामिपक्षपातः। त्वं तस्य मृत्युरित्यप्रियम्। अगुणज्ञासीत्यधिक्षेपः स्वप्नेऽस्य कृतप्रसादासीत्यसाक्षिकं प्राणपरिरक्षणार्थं मभ्यर्थयतइति कातरता। तत्रागम्यतामित्याज्ञावारितोऽपि बलवदागच्छतीति परिभवः। तदेवमगोचरे गिरां श्रुत्वा देवी प्रमाणमित्यभिधाय तूष्णीमभूत्।

अथ सरस्वती प्रीतिविस्तारितेन चक्षुषा प्रत्यवादीत्। अयि! न शक्नोमि बहु भाषितुं एषास्मि ते वचसि स्थिता मधुरभाषिणी गृह्यताममी प्राणाइति। मालत्यपि देवी यदाज्ञापयति प्रसादइत्यभिधाय हर्षपरवशा प्रजविना तुरङ्गमेणावततार शोणं। अगाञ्च दधीच मानेतुं च्यवनाश्रमम्। इतरा तु सखि स्नेहेन सावित्री मपि विदितवृत्तान्तामकरोत्। उत्स

लज्जाभारभृता ताम्यता चेतसा कदर्थ्यमानं कथं कथमपि वासरशेष मनैषीत् ।

अस्तमुपगते भगवति गभस्तिमति स्तिमिततरम वतरति तिमिरे प्रहसितामिव सितां दिशं पौरन्दरीन्दरीमिव केसरिणि मुञ्चति शशिनि सरस्वतीशोचिनि चीनांशुक सुकुमारतरे रागिणि दुकूलकोमले शयनइव शोणसैकते समुपविष्टा स्वयङ्कृतप्रार्थना पादतललग्नान्दधीचचरणनखचन्द्रिकामिव चन्दनललाटिकां दधाना गण्डस्थलादर्शप्रतिविम्बितेन चारुहासिनि! अयमसावाहूतो हृदयदयितोजन इतिश्रवणसमीपवर्त्तिना निवेद्यमानमदनसन्देशेवेन्दुना विकृष्यमाणनखकिरणचक्रवालेन बालव्यजनीकृतेन चन्द्रकरेणेव जयन्ती स्वेदितं ललाटपट्टं अत्र दधीचाहूतेन केनचित्प्र वेष्टव्यमिति तिर्य्यक्चित्तभुवा पातितां विलासवेत्रलतामिव बालहणालिकां दधाना स्तनं हृदयेनावहन्ती प्रतिपालयामास तम् ।

आसीच्चास्यां मनसि अहमपि नाम सरस्वती यदनामुना मनोजन्मना निरनुक्रोशेन परवीकृता । तत्र का गणना इतरासु तपस्विनीष्वतितरलासु तरुणीष्विति ।

आजगाम च मधुमासइव सुरभिगन्धवहो हंसइव कृतमृणालधृतिः शिखण्डीव प्रीत्युन्मुखो मलयानिल इव आहितसरसचन्दनधवलधनुर्लतोत्कम्प आकृष्यमाणइव कृतकरकचग्रहेण ग्रहपतिना प्रेर्यमाणइव कन्दर्पोद्दीपनदक्षेण दक्षिणानिलेन उह्यमानइवोत्कलिकाबहुलेन रतिरसेन परिमलसम्पातिना मधुकरपटलेन नीलपटेनेव च्छादिताङ्गयष्टिरन्तः स्फुरता मत्तमदनकरिकर्णशङ्कायमानेन प्रतिमेन्दुना प्रथ-

माङ्गविलासविलक्षः स्मितेनेव धवलीक्रियमाणैककपोलोदरो मालतीद्वितीयो दधीचः।

आगत्य च हृदयगतदयितानूपुररवमिश्रएव हंसस्वनगद्गदया गिरा कृतसम्भाषणो मन्मथ आज्ञापयति यथा यौवनमुपदिशति यथा विदग्धरुध्यापयति यथानुरागं शिक्षयति यथा तथा ताभिरभिरामां रामामरमयत्। जातविस्रम्भया चाकथयदात्मानमस्य सरस्वतीति तया तु सार्द्धमेकं दिवसमिव सम्वत्सरमधिकमजनयत्।

अथ दैवयोगात् बभार गर्भं सरस्वती। असूत च साऽनेहसा सर्वलक्षणाभिरामन्तनयम्। तस्मै जातमात्रे एव सरहस्याः सर्वे वेदाः सर्वाणि शास्त्राणि सकलाश्च कलाः सर्वा विद्याः मत्प्रभावात् स्वयमेवाविर्भविष्यन्तीति सरस्वती वरमदात्। सद्भर्त्तृश्लाघया च दर्शयितुमिव हृदयेनादाय दधीचम्पितामहादेशात् समं सावित्र्या पुनरपि ब्रह्मलोकमारुरोह। गतायाञ्च तस्यां दधीचो हृदि ह्लादिन्येवाभिहतोभार्गववंशसम्भवस्य सुभ्रातुर्ब्राह्मणस्य जायामक्षमालाभिधानां मुनिकन्यकामात्मसूनोः सम्वर्धनाय नियुज्य विरहातुरस्तपसे वनमगात्। यस्मिन्नेव वासरे सरस्वत्यसूत तनयं तस्मिन्नेवाक्षमालापि तनयं प्रसूतवती। तौ तु सा निर्विशेषं सामान्यस्तन्याशनौ शनैः शनैः समवर्धयत्। एकतरस्तयोः सारस्वताख्योऽभवत्। अपरोवत्सनामासीत्। आसीच्चोभयोः सोदर्ययोरिव सहजा स्पृहणीया प्रीतिरिति। अथ सारस्वतोमातुर्महिम्ना यौवनारम्भएवाविर्भूताशेषविद्यासम्भारस्तस्मिन् सवयसि भ्रातरि प्रिये प्राणसमे सुहृदि वत्से वाङ्मयं समस्तमेव सञ्चारयामास। चकार च कृतदारपरि-

गृहस्यास्य तस्मिन्नेव प्रदेशे प्रीत्या प्रीतिकूटनामानं निवासम्। आम्नायाषाढी कृष्णाजिन्यक्षवलयी वल्कली मेखली जटी च भूत्वा तपस्यायै जनयितुरेव जगामान्तिकम्।

अथ वत्सात् प्रवर्धमानादादिपुरुषवंशादिव जनितोन्नति-निर्गतप्रघोषः परमेश्वरशिरोधृतः सकलकलागम्भीरो महा-मुनिमान्यो विपक्षक्षोभक्षमः क्षितितललब्धायतिः सुललित-प्रवृत्तो भागीरथीप्रवाह इव पावनः प्रावर्ततातिविमलो वंशः। यस्मिन्नजायन्त वात्स्यायननामानो गृहमुनय आश्रितयोऽप्यना-डम्बितालीकबककाकलीकृतकुक्कुटवृत्ता अवैतालवृत्तयो विव-र्जितजनपङ्क्तयः परिहृतकपटकौटिकीचिकूटाकृता अगृहीत-गह्वरा न्यक्कृतनिकृतयः प्रसन्नभूतयो विगतविकृतयः परिवाद-पराधीनचेतसो वर्णत्रयव्यावृत्तिविशुद्धान्धसो धीरधीषणा-वधूताध्येषणा असङ्कुचितस्वभावाः प्रणतप्रणयिनः शमितसमस्त-शाखान्तरसंशीतयः उद्घाटितसमस्तग्रन्थगूढार्थग्रन्थयः कवयो वा-ग्मिनो विमत्सराः परसुभाषितव्यसनिनो विदग्धपरिहासवेदि-नः परिचयपेशलाः नृत्यगीतवादित्रेष्वबाह्या ऐतिहासिका वितृष्णाः सानुक्रोशाः सत्यशुचयः सर्वसाधुसम्मताः सर्वसत्त्वसाधा-रणाः सौहार्दद्रवार्द्रहृदयास्तथा च सर्वगुणोपेता राजसेना-नभिभूताः क्षमाभाजः आश्रितनन्दना अनिस्त्रिंशा विद्या-धरा अजडाः कलावन्तो अदोषास्तारका अपरोपतापिनो भा-स्वन्तः अनुष्माणो हुतभुजोऽकुसृतयोऽभोगिनोऽस्तम्भाः पुण्य-वशा अलुप्तक्रतुक्रियादक्षा अव्यालाः कामजितो द्विजातयः। तेषु चैवमुत्पद्यमानेषु संसरति च संसारे यातेषु युगेषु अव-तीर्णे कलौ वहत्सु संवत्सरेष्वतिक्रामति काले प्रसवपरम्परा-

भिरनवरतमापतति विकासिनि वात्स्यायनकुले क्रमेण कुवेरनामा वैनतेय इव गुरुपक्षपाती द्विजो जन्म लेभे ।

तस्याभवन्नच्युत ईशानो हरः पाशुपतश्चेति चत्वारो युगारम्भा इव ब्रह्मतेजोजन्यमानप्रजाविस्तारा नारायणबाहुदण्डा इव सचेतस श्चक्रनन्दकास्तनयाः । तत्र पाशुपतः स एक एवाभवत् । बभार इवाचलकुलस्थितिहेतु रुद्धिगम्भीरोऽर्थपतिरिति नाम्ना सोऽग्रजन्मा चक्रचूडामणिर्महात्मा सूनुः सोऽजनयत् । भृगुं हंसं शुचिं कविं महीदत्तं धर्मं जातवेदसं चित्रभानुं त्र्यक्षं विश्वरूपं मेघदत्तं चैत्येकादशरुद्रानिव सोऽमृतरसच्छुरितमुखान् पुत्रानलभत । चित्रभानु स्तेषां मध्यराज्यदेव्यभिधानायां ब्राह्मण्यां बाणमात्मजं स बाल एव बलवतोविधे र्वशादुपसम्पन्नया व्ययुज्यत जनन्या । जातस्नेहस्तु नितरां पितैवास्य मातृतामकरोत् । अपद्यत चायमधिकमाधीयमानधृतिधाम्नि निजे कृतोपनयादिक्रियाकलापस्य समावृत्तस्यास्य चतुर्दशवर्षदेशीयस्य पिता श्रुतिस्मृतिविहितं कृत्वा द्विजन्मोचितमखिलं पुण्यजातं कालेनादशमीस्थ एवास्तमगात् । तस्मिं च पितरि महता शोकवेगेनाभीलमनुप्राप्तो दिवानिशं दह्यमानहृदयः कथमपि कतिपयान्दिवसानात्मगृह एवानैषीत् । गते च विरलतां शोके शनैः शनै रविनयनिदानतया स्वातन्त्र्यस्य कुतूहलबहुलतया बालभावस्य धैर्यप्रतिपक्षतया यौवनस्य शैशवोचितान्यनेकानि चापलान्यनुभवन् इत्वरीबभूव । अथश्चास्य सवयसः सुहृदः सहायश्च ।

तद्यथा । प्रतीहारौ भ्रातरौ पारशवौ चन्द्रसेनमातृषेणौ कविरीशानः परं मित्रं प्रणयिनौ भट्टनारायणौ । वि-

द्वांसौ वारबाणवासबाणौ वर्णकविर्वीणाकरोभरतः प्राकृत-
कृत् । कुलपुत्रो वायुविकारः । बन्दिनावनङ्गबाणसूचि-
बाणौ कात्यायनिका चक्रवाकिका । जाङ्गलीको मायूरकः
ताम्बूलदारकश्चण्डकः भिषक्पुत्रोमन्दारकः । पुस्तकवाचकः
सुदृष्टिः । कलादश्चामीकरः । भौरिकः सिन्धुसेनः । लेखको
गोविन्दः । चित्रकृद्वीरकः । पुस्तककृत् कुमारदत्तः । मार्द-
ङ्गिको जीमूतकः । गायकौ सोमिलग्रहादित्यौ । सैरन्ध्री-
कुरङ्गिका । वांशिकौ मधुकरपारावतौ । गान्धर्वोपाध्या-
योदर्दुरकः । सम्बाहिका केरलिका । लासकयुवा ताण्डविकः
आक्षिक आखण्डलिकः । शैलालियुवा शिखण्डकः । कीना-
शो भीमकः । नर्तकी हरिणहरिणिका । पाराशरी सुमतिः ।
क्षपणको वीरसेनः । कथनिको जयसेनः । शैवश्चण्डघोषः ।
मन्त्रसाधकः करालः । असुरविवरव्यसनी लोहिताक्षः ।
धातुवादी विहङ्गमः । दार्दुरिको दामोदरः । ऐन्द्रजा-
लिकश्चकोराक्षः । मस्करी ताम्रचूडः । स एभिरन्यैश्चानु-
गम्यमानो बालतया निघ्नतामुपगतो देशान्तरालोकनकुतूहले-
नाक्षिप्यमाणः सत्स्वपि पितृपितामहोपात्तेषु ब्राह्मणोचितेषु
विभवेषु सति चाविच्छिन्ने विद्याप्रसङ्गे गृहान्निरगात् । अगाच्च
निरवग्रहो ग्रहवानिव युवा स्वैरिणा मनसा महतामपहास्य-
ताम् । अथ शनैः शनैरत्युदारव्यवहृतिमन्ति बृहन्ति राजकु-
लानि वीक्षमाणोऽनवद्यविद्याविद्योतितानि गुरुकुलानि सेव-
मानो मनोहरालापगम्भीरा गुणवद्गोष्ठीरुपतिष्ठमानः स्वभाव-
धीरधीधनानि विदग्धमण्डलानि गाहमानः पुनरपि तामेव
वैपश्चितीमात्मवंशोचितां प्रकृतिमभजत । महतश्च कालात्त-

मेव भूयोऽपि वात्स्यायनवंशाश्रममात्मनो जन्मभुवं ब्राह्मणाधिवासमगच्छत्। तत्र चिरदर्शनादभिनवीकृतस्नेहसद्भावैः सम्भ्रमप्रकटितप्रीतैराप्तैरुत्सवदिवस इवाभिनन्दितागमनो मित्रमण्डलमध्यगतो मोक्षसुखमिवान्वभवदिति।

इति श्रीहर्षचरिते कविवंशो नाम प्रथमोच्छ्वासः।



# द्वितीयोच्छ्वासः।

अति गम्भीरे भूपे कूप इव जनस्य दुरवतारस्य।
दधति समीहितसिद्धिं गुणवन्तः पार्थिवा घटकाः।
रागिणि नलिनलक्ष्मीं दिवसो निदधाति दिनकरप्रभवाम्।
अनपेक्षितगुणदोषः परोपकारः सतां व्यसनम्।

अथ तत्राध्ययनध्वनिमुखराणि भस्मत्रिपुण्ड्रपाण्डुरललाटपट्टैः कपिलशिखाजालजटिलैः कृशानुभिरिव क्रतुलोभादागतैर्वटुभिरध्यास्यमानानि सेकसुकुमारसोमकेदारिकाहरितायमानप्रघाणानि कृष्णाजिनशुष्यत्पुरोडाशीयश्यामाकतण्डुलानि बालिकाविकीर्यमाणनीवारबलीनि शुचिशिष्यशतानीयमान-हरितकुशपूलीपलाशसमिद्धेन्धनगोमयपिण्डसङ्कुटानि आमिक्षीयक्षीरक्षारिणीनामग्निहोत्रहोमधेनूनां खुरवलयैर्विखण्डिताजिरवितर्दिकानि कामण्डलस्य मृत्पिण्डविमर्दनव्यग्रयतिजनानि वैतानवेदिशङ्कव्यानामौदुम्बरीणां शाखानां राशिभिः पवित्रीकृतपर्यन्तानि वैश्वदेवबलिपिण्ड

पाण्डुरितप्रदेशानि हविर्धूमधूसरारुणविटपिकिसलयानि वल्मीयबालकलापितललत्तरलतर्णकानि क्रीडत्कुरङ्गशावप्रकटितपशुबन्धप्रबन्धानि शुकशारिकाध्ययनोदीयमानोपाध्यायविश्रान्तिसुखानि साक्षात्त्रयीतपोवनानीव चिरदृष्टानामप्रीयमाणो बहूनि भ्रमन् भवनानि सुखमतिष्ठत् ।

तत्र तस्य चास्य कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानमल्लिकाधवलाट्टहासो महाकालः । प्रत्यग्रनिर्जितस्यास्य मुपगतवतो वसन्तसामन्तस्य बालापत्येष्विव पयः पायिषु नवोद्यानेषु दर्शितस्नेहो मृदुरभूत् । अभिनवोदितश्च सर्वस्यां पृथिव्यां सर्वसुमनोबन्धनमोक्षमकरोत् । प्रतपञ्चण्णसमयः स्वयम्बुराजस्याग्रस्यन्ताभिषेकाद्रीश्वामरकलापाइव कामिनीचिकुरचयाः कुसुमायुधेन हिमदग्धसकलकामिनीकोपेनेव हिमालयाभिमुखीं यात्रामकरोदंशुमाली । ललाटन्तपे तपति तपने हरिचन्दनलिखितललाटिकापुण्ड्रकैरलकचीवरसवीतैः स्वेदोदबिन्दुमुक्ताक्षवलयाभिर्दिनकराराधननियमादृषाग्रस्यन्त ललमाललाटेन्दुभिश्चन्दनधूलिधूसरिताभिरसूर्यम्पश्याभिः कुमुदिनीभिरिव दिवसमसुप्यत सुन्दरीभिर्निद्रालसा रत्नालोकमपि नासहन्त दृशः । किमुत जठरातपम् । अग्निशिरसमयेन चक्रवाकयुगलाभिनन्दिताः सरित इव विमानमनीयन्त सोडुपाः शर्वर्यः ।

अभिनवपाटलामोदसुरभिपरिमलन्न केवलं जलं जनस्य समकृत विरलदलवीरुधि रुधिरकुतूहलिकेसरिकिशोरकलिह्यमानकठोरघातकीस्तवके ताम्यत्स्तम्बेरमयूथपमधुलिह्विद्यामाम महामहीधरनितम्बे दूयमानद्विरददीयमानदानाम्भान-

श्यामिकालीनमूकमधुलिहि लोहितायमानमन्दारसिन्दूरित-
सीम्नि सलिलस्यन्दसन्देहमुग्धदहनमहिषविषाणकोटिलिखित-
स्फुटत्स्फटिकदृषदि घर्ममर्मरितगर्मुति तप्तपांशुकुलविकिरण-
कातरविविष्किरे विवरशरणशाविडितटार्जुनकुररकूजाज्वरवि-
वर्तनोत्तानशफरीशावशारपङ्कशेषोष्णाम्भसि दावदहनजनित-
जयनीराजने रजनीराजयक्ष्मणि कठोरीभवति निदाघकाले
प्रतिदिनमुड्डीयमाना इव खेषु प्रपाकटकुटीपटलप्रकटतुण्डा-
काः पक्वकपिकच्छुगुच्छाच्छोटनचापलैः कासकण्डूला इव कर्ष-
न्तः शर्करिलाः कर्करस्थूलदृषच्चूर्णमुचो मुचकुन्दकन्दलदलन-
दन्तुराः सन्तततपनतापपतन्मुखरचीरिनिकरसिच्यमानतनवो-
दारुणतरतरणितापतरले तरन्त इव तरङ्गिणि मृगतृष्णिका
तरङ्गिणीनामलीकवारिणि शुष्यच्छमीमर्मरमारवमार्गलङ्घन-
लाघवजङ्घाला रैषवावर्तमण्डलीरेचकरासकरभसादग्धस्थ-
लीमभिमिलनमलिनाः शिञ्चितचपपत्त्रकृत्य इव मयूरपिच्छ-
निचयानुच्छून्वन्तः सप्रयाणगुञ्जा इव शिञ्जानजरत्करञ्जको-
शमञ्जरीबीजजालकैः सप्ररोहा इवातपातुरवनमहिषनासा-
निकुञ्जनिष्ठ्यूतस्थूलनिश्वासैः सापत्या इवोड्डीयमानजवन-
वातहरिणप्ररिपाटीपेटकैः सभ्रूकुटय इव दह्यमानवलयानस
कूटकुटिलधूमकोटिभिः सवीचय इव महोष्मसुक्तिभिर्लोमशा
इव विशीर्यमाणशाल्मलीफलकुलतन्तुभिर्दूना इव शुष्कपत्र-
प्रकराभ्रकृष्टिभिः शिराला इव शुष्कतृणवेणीविकरणै रुक्ष-
मश्रव इव पूयमानयवशूकशङ्कुभिर्दंष्ट्राला इव चलितशल्ल-
लीसूचीशतैर्जिह्माला इव वनवैश्वानरशिखिभिरल्पपल्लवक-
ञ्चुकचूडालाः प्रह्लस्तम्बरसाभ्यवहरणाय कवलग्रहमिवोष्णैः

कमलमधुभिरभ्यक्ताः सकलसरित्स्रोतःशोषणशोषणसौर-
पटहैरिव शुष्कवेणुवनास्फोटनपटुरवैस्त्रिभुवनविभीषिकामुद्भा-
यन्तस्स्फुरितबलल चाषपक्षश्रेणीशारितस्फुटतयस्त्विषिमयूखलताला-
तप्लोषकल्माषवपुष इव स्फुटितगुञ्जाफलस्फुलिङ्गाङ्किता-
ङ्गाः गिरिगुहागम्भीरझाङ्कारभीषणभ्रान्तयस्त्रिभुवनभस्मी-
करणाभिचारचरुपचनचलन् दधिराङ्कतिभिरिव वारिभद्रद्रु-
मस्तम्बकदृष्टिभिस्तर्पयन्तस्तारवान् विभावसूल्वणो मग्निशिरसि-
कतातारकितनभसमशैलविलीयमानशिलाजतुरसविलिप्तदृश-
दिशो दावदहनदह्यमानचटकाण्डखण्डखचितकोटरकीट-
पटलपुटपाकगन्धकटवः प्रावर्त्तन्तोन्मत्ता इव मातरिश्वानः ।

सर्वं च भूरिभल्लसहस्रसन्धुक्षिता इव जरदजगरगम्भीरगल-
गुहावाहिभिर्वायुभिः क्वचित् स्वच्छन्दतृणचारिणो हरिणाः
क्वचित्तरुतलविवरवर्त्तिनो बभ्रवः क्वचिज्जटावल्कलावलम्बिनः
कपिलाः क्वचिच्छकुनिकुलकुलायपातिनः श्येनाः क्वचिद्विलीय-
मानलाक्षारसलोहिताश्मपयोधराः क्वचिदासादितशकुनिपक्ष-
कृतपटुतया विशिखाः क्वचिद्दग्धनिःशेषकुजन्महेतवो निर्वाणाः
क्वचित् कुसुमवासिताम्बरसुरतवयरागिणः क्वचिद्धूमो-
द्गारमन्दहृदयः क्वचित्सकलजगद्ग्रासघस्मरभस्मकाः क्वचि-
द्वेणुशिखरलग्नकृतमूर्त्तयोऽत्यन्तदृप्ताः क्वचिदचलोपयुक्तशि-
लाजातवर्त्तयिणः क्वचित्सर्वरसभुजः पीवानः क्वचिद्दग्धगु-
ग्गुलवो रौद्राः क्वचित् ज्वलितनेत्रदहनदग्धसकुसुमशरासन-
मदनाः कृतस्थाणुस्थितयः क्वचित्त्रुटज्जटाशिखावर्तनारम्भदीन-
नटाः शुष्ककासारप्रकृतिभिः स्फुटन्नीरसनीवारबीजलाजाव-
र्षिभिर्ज्वालाञ्जलिभिरिवार्चयन्तो घर्मर्तुणा महेष्टया इव संक्लीव-

माणाः कठोरस्थलकमठवसाविस्रमरगन्धगर्भाः स्वमपि धूमम-र्मभेदसम्भूतिभिरिव भजयन्तः सतिलाङ्कतय इव स्फुटद्दहलकीट-पटलाः कुथेषु श्वथिता इव शोषचिटद्वल्कलशम्बूकशुक्तयः शु-ष्केषु सरःसु स्वेदिता इव विधीयमानमधुगोलगलितमधूच्छि-ष्टवृष्टयः काननेष्टकाततय इव पर्यन्तशीर्यमाणशिखासंहतयो महोष्णगृहीतशिलाकवला इव ज्वलितसूर्य्यमणिशकलेषु शि-लोच्चयेषु प्रत्यहमस्खलन्ता दारुणा दावाग्नयः।

तथाभूते च तस्मिन्नुदिते ग्रीष्मसमये कदाचित्तस्य स्वगृहावस्थितस्य भुक्तवतोऽपराह्णसमयेऽस्य भ्राता पारशव-श्चन्द्रसेननामा प्रविश्याकथयत्। एष खलु चतुःसमुद्राधि-पतेः सकलराजचूडामणिश्रेणीशाणकोणनिर्मलीकृतचरण-नखमणेः सर्वचक्रवर्तिनां धौरेयस्य महाराजाधिराजराज-परमेश्वरस्य श्रीहर्षदेवस्य भ्राता कृष्णनाम्ना भवता मन्ति-कमप्रतिज्ञाततमो दीर्घाध्वगः प्रहितो द्वारमध्यास्त इति।
सोऽब्रवीत्। आयुष्मन्नविलम्बितं प्रवेशयैनमिति। अथ तेनानी-यमानमति दूरागमनगुरुतरजङ्घाकाण्डकार्दमिकचेलचीरिका-नियमितोच्चण्डचण्डातकं पृष्ठप्रेङ्खत्पटच्चरकर्पटघटितगलग्रन्थि-मतिनिविड़सूत्रवन्धनिर्मितां मरालकृतलेखव्यवच्छेदया लेख-मालिकया कबरीकलितमूर्धानं मेखलकनामानं प्रविशन्त-मद्राक्षीत्।

अरक्षीच्च दूरादेव भद्रमशेषनिष्कारणबन्धोस्तत्रभवतः कृष्णस्येति। स भद्रमित्युक्त्वा प्रणम्य नातिदूरे समुपाविशत्। एष खलु स्वामिनानीय लेखः प्रहित इति। किमुच्चार्य्य यत् बाणस्तु सादरं गृहीत्वा स्वयमेवावाचयत्। मेखलकात्सन्दिष्ट-

अवधार्य फलप्रतिबन्धी धीमता परिहरणीयः कालातिपात इत्येतावदर्थजातमितरद्वार्त्ता-सम्पादमात्रमित्यवधृत-लेखार्थश्च समुत्सारितपरिजनसन्देशं पृष्टवान्। मेखलकस्त्ववादीत्। एवमाह मेधाविनं स्वामी जानात्येव मान्यः यथा एकगोत्रता समानजातिता वा सहसंवर्द्धनं वा एकदेशनिवासो वा परस्परानुरागश्रवणं वा परोक्षोपकारकरणं वा समानशीलता वा स्नेहस्य हेतवः त्वयि तु विना कारणेनादृष्टेऽपि प्रत्यासन्नबन्धाविव पक्षपाति किमपि स्निह्यति मे हृदयम्। दूरस्थितेऽपीन्दाविव कुमुदाकरे यतोभवन्तमन्तरेणान्यथा चायं चक्रवर्त्तिदुर्जनैर्ग्राहितश्चासीत्। नच तत्तथानन्त्येव ते। येषां सतामपि न विद्यन्ते मित्रोदासीनशत्रवः। शिशुचापलपराधीनचेतोवृत्तितया भवतः केनचिदसहिष्णुना यथैव किञ्चिदसदृशमुदीरितम्। इतरलोकस्तथैव तद्गृह्णाति च वक्ति च सलिलानीव गतानुगतिकानि भवन्त्यविवेकिनां मनांसि। बहुमुखश्रवणानिश्चलीकृतनिश्चयः किं करोतु पृथ्वीपतिः। तत्त्वान्वेषिभिश्चास्माभिर्दूरस्थोऽपि प्रत्यक्षीकृतोऽसौ विद्वन्मस्कवर्त्तित्वादिममर्थं। यथा प्रायेण प्रथमे वयसि सर्वस्यैव चापलैः शैशवं पराधीयति तथैवेति प्रतिपन्नं स्वामिना। अतोभवता राजकुलमकृतकालक्षेपमागन्तव्यम्। अज्ञं शशीवादृष्टपरमेश्वरो बन्धुमध्यमधिवसन्नासि मे बहुमतः। न च सेवावैषम्यविषादिना परमेश्वरोपसर्पणभीरुणा वा भवितव्यं यतोयद्यपि।

स्वेच्छोपजातविषयोऽपि न याति वक्तुम्
देहीतिमार्गणशतैश्च ददाति दुःखम्।

मोहात्समाक्षिपति जीवितमप्यकाण्डे
कष्टोमनोभवइवेश्वरदुर्विदग्धः ॥

तथाप्यन्ये ते नरपतयः। अन्यएव यन्त्यकृतनृगनलनहुषाम्बरीषदशरथदिलीपनाभागभगीरथधुन्धुमारययातिरचितमयस्वामी। नास्याहङ्कारकालकूटदुष्टा दृष्टयः। न गर्वगलग्रहगद्गदा गिरः। नातिस्मयापस्मारविस्मृतधैर्याणि स्थानकानि। नोद्दामदर्पदाहज्वरविक्लवा विकाराः नाभिमानमहासन्निपातनिर्मिताङ्गभङ्गानि तानि। न मदार्दितवक्रीकृतोष्ठपृष्ठनिष्ठूतनिष्ठुराक्षराणि जल्पितानि तथाचास्य अनाविलेषु साधुषु रत्नबुद्धिः। न मणिशिलाशकलेषु। मुक्ताधवलेषु गुणेषु प्रसाधनधीः नाभरणभारेषु दानवत्सु कर्मसुसाधनश्रद्धा न करिक्रीडेषु सर्वाशाग्रेसरे यशसि महाप्रीतिः न जीवितजरात्तिणे गृहीतकारासु हि नु प्रसाधनाभियोगः न निजकलत्र चर्मपुत्रिकासु गुणवति धनुषि सहायचिन्ता न पिण्डोपजीविनि सेवकशुनि अपि च।

अस्य मित्रोपकरणमात्मा भृत्योपपकरणम्प्रभुत्वं पण्डितोपकरणं वैदग्ध्यम् बान्धवोपकरणं लक्ष्मीः कृपणोपकरणमैश्वर्यम् द्विजोपकरणं सर्वस्वम् सुकृतस्मरणोपकरणं हृदयम् धर्मोपकरणमायुः साहसोपकरणं शरीरं शीलतोपकरणं पृथ्वी विनोदोपकरणं राजकं प्रतापोपकरणं प्रतिपक्षः नास्याल्पपुण्यैरवाप्यते सर्वातिशायिनी सुखप्रसूतिः पादपल्लवच्छायेतिश्रुत्वा तमेव चन्द्रसेनं समादिशत् कृतश्चैव विश्रान्तम् सुखिनमेनङ्कारयेति ॥

अथ गते च तस्मिन् पर्यस्ते वासरे सङ्कुटमानरक्तपङ्कजसं-

पुटपीयमानइव चर्यिणि चामतां व्रजति बालवायसाक्षणे अपराह्लातपे शिथिलितनिजवाजिजवे जपापीडपाटलेऽस्ताचलशिखरसलिले खञ्जतीव कमलवनकण्टकक्षतपादपल्लवे पतङ्गे पुरः परापतति प्रेङ्खदन्धकारलम्बालके शशिविरहशोकश्यामइव श्यामतामुखे कृतसन्ध्योपासनशयनमगात्। अचिन्तयत् च एकाकी किं करोमि अन्यथासम्भवितोऽस्मि राज्ञा निष्कारणबन्धुना च संदिष्टमेवं कृष्णेन कष्टाच राजसेवा विषमं भृत्यत्वम्। अतिगम्भीरं महद्राजकुलम् न हि च तत्र मे पूर्वप्रवर्तिता प्रीतिः न कुलक्रमानतिः। नोपकारस्मरणानुरोधः न बालसेवास्नेहः न तत्र गौरवम् न पूर्वदर्शनदाक्षिण्यम् न प्रज्ञासविभागोपप्रलोभनम् न विद्यातिशयकुतूहलम् नाकारसौन्दर्यादरः न सेवाकारकौशलम् नविद्वद्गोष्ठीबन्धवैदग्ध्यं न मितव्ययवशीकरणम् न राजवल्लभपरिचयः अवश्यं गन्तव्यं सर्वथा भगवान् भवाणीपतिस्त्रिभुवनगतिर्गतस्य मे शरणम्। स सर्वं साम्प्रतमाचरिष्यतीत्यवधार्य गमनाय मतिमकरोत्। अन्यस्मिन्नहन्युत्थाय प्रातरेव स्नातो धृतधवलदूकूलवासा गृहीताक्षमालः प्रास्थानिकानि कानिचित् सूक्तानि मन्त्रपदानि च बहुशः समावर्त्य देवदेवस्य विरूपाक्षस्य क्षीरस्नपितपुरःसरां सुरभिकुसुमधूपगन्धध्वजबलिविलेपनप्रदीपबहुलां सपर्यां विधाय परमया भक्त्या प्रथमङ्कततरलतरतिलदानचटुलशिखरशिखाशेखरं प्राज्याज्याहुतिप्रवर्धितप्रदक्षिणार्चिषं भगवन्तमाशुशुक्षणिं हुत्वा द्युम्नं यथाविद्यमानं द्विजेभ्यः प्रदक्षिणीकृत्य प्राङ्मुखनैचिकीं गां शुक्लाङ्गरागः शुक्लमाल्यः शुक्लवासा गोरोचनाचित्रित-

दूर्वाग्रपल्लवग्रथितगिरिकर्णिकाकुसुमकर्णपूरशिखासक्तसिद्धार्थकः पितुः कनीयस्या स्वस्रा स्वमात्रेव स्नेहार्द्रहृदयया श्वेतवाससा साक्षादिव भगवत्या महाश्वेतया मालवत्याख्यया कृतसकलगमनमङ्गलो दत्ताशीर्बान्धववृद्धाभिरानन्दितः परिजनजरतीभिर्वन्दितचरणैरनुज्ञातो गुरुभिरभिवादितैराघ्रातः शिरसि कुलवृद्धैर्वर्द्धितगमनोत्साहः शाकुनिकैर्मौहूर्त्तिकैर्मतेन कृतनक्षत्रदोहदशोभमाने मुहूर्त्ते हरितगोमयेनोपलिप्ताजिरस्थण्डिलस्थापितमसितेतरकुसुममालापरिक्षिप्तकण्ठपृष्ठपद्माङ्कुलपाण्डुरं मुखनिहितनवचूतपल्लवपूर्णकलशमीक्षमाणः प्रणम्य कुलदेवताभ्यः कुसुमफलपाणिभिरप्रतिरथं जपद्भिर्निजद्विजैरनुगम्यमानः प्रथमचलितदक्षिणचरणप्रतरः प्रीतिकूटान्निरगात्।

प्रथमेऽहनि तु घर्मकालकष्टश्लिष्टदकन्निष्पन्नपादपविषमं पथिकजनशतनमस्क्रियमाणं प्रवेशपादपोत्कीर्णकात्यायनीप्रतियातनं शुष्कमपि पल्लवितमिव तृषितश्वापदकुललम्बितलोलजिह्वालतासहस्रैः पुलकितमिव शुष्कगलगोलाङ्गूललिह्यमानमधुगोलचलितसरघासङ्घातैः रोमाञ्चितमिव दग्धस्थलीरूढैः कन्दशतैः शनैः शण्डिकाकाननमतिक्रम्य मल्लकूटनामानं ग्राममगात्। तत्र हृदयनिर्विशेषेण भ्रात्रा सुहृदा च जगत्पतिनाम्ना सम्पादितसपर्यसुखमतिष्ठत्। अपरेद्युरुत्तीर्य भगवतीं भागीरथीं यष्टिग्रामनाम्नि वनग्रामके निशामनैषीत्। अन्यस्मिन्दिवसे स्कन्धावारमुपमणितटमस्वजितवनीकृतसन्निवेशमाससाद। अतिष्ठच्च नातिदूरे राजभवनस्य निर्वर्त्तितस्नानाशनव्यतिकरो विश्रान्तश्च मेखलकेन

याममात्रावशेषे दिवसे भुक्तवति भूभुजि प्रख्यातानां क्षिति-
भुजां बहून् शिबिरसन्निवेशान् वीक्षमाणः शनैः शनैः पट्टबन्ध-
नार्थमागतैः डिण्डिमारोहणार्थमाहूतैश्चाभिनवबन्धैश्च कोश-
लिकागतैश्च प्रथमदर्शनकुतूहलोपनीतैश्च नागवीथिपालप्रेषि-
तैश्च दूतसंप्रेषणरक्षितैश्च पल्लीपरिवृढढौकिकैश्च स्वेच्छायुद्धक्री-
डाकौतुककारितैश्च दीयमानैश्चाच्छाद्यमानैश्च यामावस्थितैश्च
सप्तद्वीपजिगीषया गिरिभिरिव सागरसेतुबन्धनार्थमेकीकृतै-
र्ध्वजपटपट्टरवपटहशङ्खचामराङ्गरागरमणीयैर्भूत्याभिषेकदिव-
सैरिव कल्पितैर्वारणेन्द्रैः श्यामायमानां विरतचलितखुरपुटप्र-
हतपटुस्पन्दाङ्गैर्नर्त्तयद्भिरिव राजलक्ष्मीमपहसद्भिरिव स्वम-
पुटप्रकटफेनाट्टहासैर्जवजडजङ्घाकाण्डां हरिणजातिमाकार-
यद्भिरिव सद्यातहर्षह्रेषितैरुच्चैःश्रवसमुत्पतद्भिरिव दिवस-
कररथतुरगरूपा पल्लायमानमण्डनचामरमालैर्गगनतलकुरङ्गै-
स्तुरङ्गायमानमन्यत्र प्रेषितैश्च प्रेष्यमाणैश्च प्रेषितप्रतिनिवृत्तैश्च
बहुयोजनगमनगणनासंख्याक्षरावलिभिरिव वराटिकालि-
भिर्घटितमुखमण्डनकैस्तारकितैरिव रक्तशालिशालेयैरनवरत-
झणझणायमानचारुचामीकरघुरघुरमालिकैर्जरत्कञ्जवनैरिव
रणितशुष्कबीजकोशशीतैः श्रवणोपान्तप्रेङ्खत्प्ररागवर्णै-
णारचितचित्रचूडाचटुलैः कपिकपिलकपोलैः क्रमेलककुलैः
कपिलायमानमन्यत्र शरज्जलधरैरिव सद्यः स्रुतपयःपटलधवल-
तनुभिः कल्पपादपैरिव मुक्ताफलजायमानालोकलुप्तवा-
सरच्छायामांसलैर्नारायणनाभिपुण्डरीकैरिवाश्लिष्टगारुडपत्रैः
क्षीरोदोद्देशैरिव द्योतमानविकटविद्रुमदण्डैः शेषफणाफलकै-
रिवोपरि परिस्फुरन्माणिक्यमण्डलैः श्वेतगङ्गापुलिनैरिव राज-

हंसोपशोभितैरभिभवद्भिरिव निदाघसमयं परिभवद्भिरिव विवस्वतः प्रभावम्पिबद्भिरिवातपञ्चन्द्रमयमिव जीवलोकं जनयद्भिः कुमुदमयमिव कालं कुर्वद्भिर्ज्योत्स्नामयमिव वासरं जनयद्भिः फेनमयमिव दिवसं दर्शयद्भिरकालकौमुदीसहस्राणीव सृजद्भिरपहसद्भिरिव शातक्रतवीं श्रियं श्वेतायमानैरातपत्रषण्डैः श्वेतद्वीपायमानं क्षणदृष्टनष्टाष्टमीन्दुसुखमुखां मुञ्चद्भिरिव भुवनमाक्षेपात् क्षेपदोलायितन्दिनङ्गतागतानीव कारयद्भिरुत्तारयद्भिरिव कुनृपतिसम्पर्कलीलां कालेयीं स्थितिं विकचविशदकाशवनपाण्डरदशदिशं शरत्समयमिवोत्पादयद्भिर्विसतन्त्वयमिवान्तरिक्षमाविर्भावयद्भिः शशिकरशुचीनाञ्चामराणाञ्चलतां सहस्रैर्दोलायमानमपि च हंसायमानङ्करिकर्णशङ्खैः कल्पलतायमानं कदलिकाभिर्माणिक्यवृक्षायमाणं मायूरातपत्रैर्मन्दाकिनीप्रवाहायमाणं धवलांशुकैः क्षीरोदायमानं क्षौमैः कदलीवनायमानं मरकतमयूखैर्जन्यमानान्यदिवसमिव पद्मरागबालातपैरुत्पाद्यमानापराम्बरमिवेन्द्रनीलप्रभापटलैरारभ्यमाणापूर्वनिशामिव महानीलमयूखान्धकारैः स्यन्दमानानेककालिन्दीप्रवाहमिव गारुडमणिप्रभावितानैरङ्गारितमिव पुष्परागरश्मिभिः कैश्चिदधोमुखैश्चरणनखनिपतितवदनप्रतिबिम्बनिभेन प्रवेशमलभमानैर्लज्जया स्वाङ्गानीव विशद्भिः कैश्चिदङ्गुलीविलिखितायाः क्षितेर्विकीर्यमाणकरनखकिरणव्याजेन सेवाचामराणिवापयद्भिः कैश्चिदुरःस्थलदोलायमानेन्द्रनीलप्रभापटलैः स्वामिप्रकोपप्रशमनाय कण्ठबद्धकृपाणैरिव कैश्चिदुच्छ्वाससौरभभ्रान्तभ्रमरान्धकारितमुखैरपहृतलक्ष्मीशोकाद्धृतश्मश्रुभि-

रिव कैश्चिच्छीकरोड्डीयमानमधुपमण्डलैः प्रणामविलम्ब-
भयतरलायमानमौलिभिरिव निस्तर्जितैरपि सम्मानितैरिवा-
नन्यशरणैरन्तरान्तराणि निष्पततां प्रविशताञ्चाभ्यन्तरम्प्रती-
हाराणामनुमार्गप्रधावितानेककार्यार्थिजनसहस्राणामनुधा-
यिनः पुरुयानश्रान्तैः पुनः पुनः पृच्छद्भिर्भद्राद्य भविष्यति
भुक्तास्थानं दास्यति वा दर्शनं परमेश्वरो निष्पतिष्यति वा
बाह्यकक्ष्यामिति दर्शनाय दिवसमनयद्भिर्भुजनिर्जितैः शत्रु
महासामन्तैः समन्तादासेव्यमानमनन्यैश्च प्रतापानुरागप्रणतै-
र्नानादेशागतैर्महीपालैः प्रतिपालयद्भिर्नरपतिदर्शनकाल-
मध्यास्यमानमेकान्तोपविष्टैश्च जिनैरार्हतैः पाशुपतैः पाराशरि-
भिर्वर्णिभिश्च सर्वजनपदागतैश्च सर्वाम्भोधिवेलावनवासिभिश्च
म्लेच्छजातिभिश्च सर्वद्वीपान्तरागतैश्च दूतमण्डलैरुपास्यमानं
सर्वप्रजानिर्माणभूमिमिव प्रजापतिना चतुर्थं लोकं महाभारत-
शतैरप्यकथनीयसमृद्धिसम्भारं कृतयुगसहस्रैरिव कल्पितस-
न्निवेशं स्वर्गार्बुदैरिवाहितरामणीयकं राजलक्ष्मीकोटिभिरिव
कृतपरिग्रहं राजद्वारमगात् ।

अभूच्चास्य जातविस्मयस्य मनसि कथमिवेदमियत् प्राणि-
जातं जनयतां प्रजापतीनां नासीत् परिश्रमः । महाभूतानां
वा परिक्षयः परमाणूनां वा परिक्षयः परमाणूनां वा परि-
च्छेदः कालस्यवान्तः आयुषो वाप्युपरमः आकृतीनां वा
परिसमाप्तिरिति । मेखलकस्तु दूरादेव द्वारपालकेन प्रत्य-
भिज्ञायमानस्तिष्ठतु तावत् क्षणमात्रमत्रैव पुण्यभागिति
तमभिधायाप्रतिहतोऽभ्यन्तरं प्राविशत् । अथ मुहूर्तादिव
प्रांशुना कर्णिकारगौरेण वद्धकञ्चुकच्छन्नवपुषा समुन्मीषन्मा-

णिक्यपदकबन्धबन्धुरवस्तुबन्धावलम्बावलग्नेन हिमशैलशिला-
विशालवक्षसा हरवृषभककुदकूटविकटांसतटेन चपलहृषीक-
हरिणसंयमनपाशमिव हारमुरसा बिभ्रता कथयतं यदि सो-
मवंशसम्भवो वा सूर्य्यवंशसम्भवो वा भूपतिरभूदेवंविध इति
प्रष्टुमागताभ्यां सोमसूर्य्याभ्यामिव श्रवणगताभ्यां स्फटिकमाणि-
क्यकुण्डलाभ्यामवभासमानेन वक्त्रह्रदनलावण्यवेणिकाच्छिप्यमा-
णैरधिकारगौरवाद्दीयमानमार्गैणेव दिनकृतः किरणैः प्रसाद-
लब्धया विकचपुण्डरीकमुण्डमालयेव स्निग्धया दीर्घया दृष्ट्या
दूरादेवानन्दायन्नैष्ठुर्य्याधिष्ठानेऽपि पदे प्रतिष्ठितेन प्रश्रयमिव
नेत्रेण मनो दर्शयता पाण्डुरमुष्णीषमुद्वहता वामेन स्थूल-
मुक्ताफलच्छुरणादन्तुरं करेण कलयता कृपाणमितरेणा-
पनीततरङ्गितान्तटिनीमिव लतां शातकुम्भीं वेत्रयष्टिमुष्टिं
धारयता वर्षवरेणानुगम्यमानो मेखलको निर्गत्यावोचत्।

एष खलु महाप्रतीहाराणामनन्तरश्चक्षुष्यो देवस्य पारि-
यात्रनामा दौवारिकस्तदेनमनुरूपया प्रतिपत्त्या कल्याणाभि-
निवेशीति। दौवारिकस्तु समुपसृत्य कृतप्रणामो गिरा मधु-
रया सविनयमभाषत। आगच्छत प्रविशत देवदर्शनाय। कृत-
प्रसादो देव इति। बाणस्तु धन्योऽस्मि यदेवमनुग्राह्यं देवोम-
न्यते। इत्युक्त्वा तेनोपदिश्यमानमार्गः प्राविशदभ्यन्तरम्।

अथ वनायुजैः काम्बोजैरारट्टजैश्च सिन्धुदेशजैश्च पारसी-
कैश्च शोणैश्च श्यामैश्च तित्तिरिकल्माषैश्च श्वेतैश्च पिञ्जरैश्च
हरिद्भिश्च पञ्चभद्रैश्च मल्लिकाक्षैश्च कृत्तिकापिञ्जरैश्चायतनि-
र्मांसमुखैश्चानुत्कटकर्णकोशैश्च सुवृत्तश्लक्ष्णघटितघण्टिकाब-
न्धैश्च शुभानुपूर्वीवक्त्रायतोदग्रग्रीवैरुपचितश्वयथुस्कन्धदेशैर्निर्भु-

ग्नोरःस्थलैरतिस्थूनग्रगुणप्रहतैर्लौहपीठकठिनखुरमण्डलैरति-
जवत्रुटनभयान्निर्मितानीन्द्रानीवोदराणि धारयद्भिरुद्यद्ग्राहि-
णीविभज्यमानपृथुजघनैर्जगतीदोलायमानबालपल्लवैः कथमप्यु-
भयतोनिखातदृढभूमिपाशसंयमननियन्त्रितैरपि पश्चात्पाशबन्ध-
परवशप्रसारितैकाङ्घ्रिभिरायततरैरिवोपलक्ष्यमाणैर्बद्धगुणसूत्र-
ग्रथितग्रीवागण्डकैरामीलितलोचनैर्दूर्वारसश्यामलफेनलवश-
बलान्दशनगृहीतमुक्तान् परपरितत्वचः कण्डूजुषः प्रदेशान्
प्रचलयद्भिः सालचलितबालधिभिरेकशफविश्रान्तिश्लथशिथिलि-
तजङ्घाकाण्डैर्निद्रया प्रख्यापयद्भिरिव यवसस्वीकारं मन्दं मन्दं
शब्दायमानैश्च ताड़ितखुरधोरणीरणितखुरशिखरविलिखि-
तक्ष्मातलैर्घासमभिलषद्भिश्च प्रकीर्यमाणयवसग्रासमत्सरस-
मुद्भूतक्षोभैश्च कुपितचण्डचण्डालहुङ्कारकातरनारतरथैश्च
कुङ्कुमप्रकृष्टिपिञ्जराङ्गतया सततसन्निहितनीराजनोपलक्ष्य-
माणैरुपरि विततवितानैः पुरः पूजिताभिमतदैवतैर्भूमिपाल-
वल्लभैस्तुरङ्गमैराचितां मन्दुरां विलोकयन् कुतूहलाक्षिप्तहृदय-
कन्दरमतिक्रान्तो वामहस्तेनात्युन्नतया निरवकाशमिवाल्प-
काशमकुर्वाणेन महता कदलीवनेन परिवृतपर्यन्तं मधुकर-
मयीभिरिवापतन्तीभिरापूर्यमाणमाशामुखविसर्पिणा पुष्पा-
णां विकसतामामोदेनावलिम्पन्तं घ्राणेन्द्रियं दूरादव्यक्त-
मिव विस्मयतारमपश्यत्।

अपृच्छच्च देव! किङ्करोऽस्मीति। असावकथयत्। एष
खलु देवस्योपवाह्यो बाह्यं हृदयं जात्यन्तरितआत्मा बहि-
श्चराः प्राणाः विक्रमक्रीड़ासुहृद्दर्पशात इति यथार्थनामा
वारणपतिः तस्यावस्थानमण्डपे महामहश्यतदृति। स तमथा-

दीत्। भद्र! श्रूयते दर्पशातः यद्येवमदोषः पश्यामि वार-
णेन्द्रमेनं तदर्हसि प्रापयितुं परवानस्मि कौतूहलेनेति
सोऽभ्यभाषत। भवत्वेवमागच्छतु भवान् को दोषः पश्यतु
वारणेन्द्रमिति गत्वा च तं प्रदेशं दूरादेव गम्भीरकण्ठगर्जितै-
र्वियति चातककदम्बकैर्भुवि च भवननीलकण्ठकुलैः कलकल-
केकारवमुखैः क्रियमाणाकालजलदकोलाहलं विकचकदम्ब-
गन्धसम्बाधिमदसुरासौरभभरितभुवनं कायवन्तमिव कालमेघ-
कालमविरलमधुपिङ्गलपद्मबिन्दुजालकितां सरसीमिवान्यरागा-
रूढान्दशाञ्चतुर्थीमुत्सृजन्तमनवरतसमङ्गलरवैः कर्णतालदुन्दुभि-
ध्वनिभिः पञ्चमदशाप्रवेशमङ्गलारम्भमिव सूचयन्तमविरतव-
लनचितत्रिपदीललितलास्यलयैर्दोलायमानदीर्घदेहाभोगतया
मेदिनीविदलनभयेन भारमिव लघयन्तं दिक्भित्तितटेषु
कायमिव कण्डूयमानमाह्वायदन्तहस्ततया दिग्वारणानि-
वाह्वयमानं ब्रह्मस्तम्भमिव स्थूलेन निर्गतदन्तेन करपल्लवेनेव
पाटयन्तं मान्तमिव भुवनाभ्यन्तरे बहिरिव निर्गन्तुमीहमानं
सर्वतः सरसकिसलयलतालासिभिः लेसिकैश्चिरपरिचयोपागतै-
र्वनैरिव परिवृतं विच्छिन्नसशैवालबिसविसरशबलसलिलैः
सरोभिरिवाधोरणैराधीयमाननिदाघसमयसमुचितोपचारान-
न्तमपि च प्रतिगजमदपवनादामदूरोत्क्षिप्तेनानेकसमरविज-
यगणनालेखाभिरिव वलीवलयरोचिभिस्तनीयसीभिस्तरङ्गितो-
दरेणातीर्घयद्रीयसा हस्तेनार्गलयन्तमिव सकलं स्वकुलशैलस-
मुद्रद्वीपकाननं ककुभाञ्चक्रवालं एकं करान्तरार्पितेन उत्पाला-
ग्रेन कदलीदण्डेनान्तर्गतशीकरसिच्यमानमूलमुक्ताफलमिवाप-
रं लीलावलम्बिना मृणालजालेन समररसोच्चरोमाञ्चकण्टकित-

मिव दन्तकाण्डं वहन्तं विसर्पन्त्या च दन्तकाण्डयुगलकान्त्या सरः क्रीडास्वादितानि कुमुदवनानीव बहुधा वमन्तं निज-यशोराशिमिव दीनमुखेष्वप्रयच्छन्तं करिकीटपाटनदुर्विदग्धान् सिंहानिवापहसन्तं कल्पद्रुमदुकूलमुखपटमिवात्मनः कलयन्त-मकाण्डकरदण्डधरणलीलासु च लक्ष्यमाणेन रक्तांशुकसुकु-मारेण तालुना कवलितानि रक्तोत्पलानीव वमन्तमभिनव-किसलयराशीनिवोद्गिरन्तं कमलकवलपीतमधुरसमिव स्वभाव-पिङ्गलेन गिलयन्तं चक्षुषा चूतपल्लवचम्पककदलीलवङ्गवनान्येला-लतामिश्राणि कर्पूरपरिपूतानि पारिजातवनानि सोपभु-क्तानि पुनः पुनः कटाभ्यां बहलमदामोदव्याजेन विसर्जयन्त-महर्निशं विभ्रमकृतस्वहस्तस्थितिभि रर्धखण्डितपुण्ड्रेक्षु-काण्डकण्डूयन लिखितैरलिकुलवाचालितैर्दानपट्टकैर्निलभमान-मिव सर्वकाननानि करिपतीनां अविरलं दानबिन्दुस्यन्दिना हिमकरशिलाशकलमयेन विभ्रमनक्षत्रमालागुणेन शिशिरी-क्रियमाणं सकलवारणेन्द्राधिपत्यपट्टबन्धबन्धुरमिवोच्चैस्तरां शिरो दधानं मुहुर्मुहुः स्थगितोपाहतदिङ्मुखाभ्यां कर्णताल-वृन्ताभ्यां वीजयन्तमिव भक्त्या दन्तपर्यङ्कस्थितां राजलक्ष्मीमा-यतवंशक्रमागतेन गजाधिपत्यचिह्नेन चामरेणेव जनितवा-लधिना विराजमानं स्वच्छशिशिरसलिलशीकरभरच्छलेन दिग्विजयार्जिताः सरित इव पुनः पुनर्विमुञ्चन्तं क्षणमवधा-नदाननिष्पन्दीकृतसकलाश्रयवानामन्यद्विरदडिण्डिमाकर्णना-ङ्कवलनानामन्ते दीर्घफूत्कारैः परिभवदुःखमिवावेदयन्तं लक्ष्यशुद्धमिवात्मानमनुशोचयन्तमाधोरणारूढपरिभवेन लज्ज-मानमिवाङ्गुलिलिखितभूतलं मन्दं मुञ्चन्तमवज्ञाम्रेडितमुक्त-

कवलकुपिताधोरणारटनानुरोधेन मदतन्द्रिनेत्रत्रिभागं कथं
कथमपि मन्दं मन्दं नादनाराद्दानं कवलानङ्गजग्धतमा-
लपल्लवश्यामलरसेन प्रभूततया मदप्रवाहमिव मुखेनाप्युत्सृ-
जन्तं ददन्तमिव दर्पेण श्वसन्तमिव शौर्येण मूर्च्छन्तमिव मदेन
वृंहन्तमिव तारुण्येन द्रवयन्तमिव दानेन वल्गन्तमिव बलेन
माद्यन्तमिव मानेन उद्यन्तमिवोत्साहेन ताम्यन्तमिव तेजसा
लिम्पन्तमिव लावण्येन सिञ्चतमिव सौभाग्यरसेन स्निग्धन्नख-
मुखेषु परुषविषयेषु गुरुं मुखे सच्छिष्यं विनये मृदुं शिरसि
दृढं परिचये ह्रस्वं स्कन्धे दीर्घमायुषि दरिद्रमुदरे सततप्रवृ-
त्तं दाने बलभद्रं मदलीलासु जिनं क्षमासु कुलकलत्रं नम्र-
तासु वह्निवर्षं क्रोधमोक्षेषु गरुड़ं नागोद्धृतिषु नारदं कलहकुतूह-
लेषु मकरं वाहिनीक्षोभेषु शुष्काशमिवास्कन्देषु आशीविषन्दश-
नकर्मसु वरुणं हस्तपाशावकृष्टिषु यमवागुरां पदातिसम्वेष्टनेषु
कालं परिणतिषु राहुं तीक्ष्णकरग्रहणेषु लोहिताङ्गं वक्रचारेषु
अलातचक्रं मण्डलभ्रान्तिविज्ञानेषु मनोरथसंपातं चिन्तामणि-
पर्वतं विक्रमस्य दन्तमुक्ताशिलास्तम्भं निवासप्रासादं अभि-
मानस्य घण्टाचारमनोहरमिच्छासञ्चरणविमानं मनस्वितायाः
मदधारादुर्दिनान्धकारितगन्धोदकधारागृहं क्रोधस्य संकोचन-
प्रतिमं महाकीर्तनमहङ्कारस्य सगण्डशैलप्रस्रवणं क्रीड़ापर्वतं
महाबलस्य सदन्ततोरणं वज्रमन्दिरं दर्पस्य उच्चकुम्भा-
ट्टालविकटसाञ्चारिदुर्गं राज्यस्य कृतानेकबाणविवरसहस्रं
लोहप्रकारं पृथिव्याः शिलीमुखशतझङ्कारितं पारिजातपा-
दपभूनन्दनस्य तथाच सङ्गीतगृहं कर्णतालताण्डवानां आमधु-
पमण्डलानामन्तः पुरं शृङ्गाराभरणानां मदनोत्सवं मदलीला-

लास्यानामशुष्कप्रदोषमनवमालामखण्डनानामकाण्डशरत्कालं मदमहानदीप्रवाहाणामलीकशरत्समयं सप्तच्छदपरिमलानां पूर्व्वहिमागमं शीकरनीहाराणां मिथ्याजलधरं गर्जितताण्डबाणां दर्पशातमपश्यत्।

आसीच्चास्य मनसि नूनमस्य निर्म्माणे गिरयो ग्राहिताः परमाणुतां कुतोऽन्यथागौरवमिदं आश्चर्यमेतत् विन्ध्यस्य दन्तवादी वराहस्य करइति विस्मयमानमेनं दौवारिकोऽब्रवीत् पश्य पश्य।

मिथ्यैवालिखितां मनोरथशतैर्न्निःशेषनष्टां श्रियं।
चिन्तासाधनकल्पनाकुलधियाम्भूयोवनेर्विद्विषां।
आयातः कथमप्ययं स्मृतिपथं शून्याभवच्चेतसा।
नागेन्द्रः सहते न मानसगतानाशागजेन्द्रानपि॥

तदेहि पुनरप्येनं पश्य तावद्देवमित्यभिधीयमानोमदजलकज्जलितकपोलपतितामुन्मत्तामिव भ्रमरमदपरिमलमुकुलितां कथं कथमपि तस्माद्दृष्टिमाकृष्य तेनैवोपदिश्यमानवर्त्मा समतिक्रम्य भूपालसहस्रसंकुलानि कक्षान्तराणि चतुर्थे भुक्तास्थानमण्डपस्य पुरस्तादजिरे स्थितं दूरादूर्द्ध्वस्थितेन प्रांशुना कर्णिकारगौरेण व्यायामव्यायतवपुषा शस्त्रिणां मौलेन शरीरपालकलोकेन पङ्क्तिस्थितेन कार्त्तस्वरस्तम्भमण्डलेनेव परिवृत्तमासन्नोपविष्टविशिष्टेष्टलोकं हरिचन्दनरसप्रक्षालिते तुषारशीकरशीतले दन्तपाण्डुरपादे शशिमय इव मुक्ताशैलधवले शिलापट्टशयने समुपविष्टं शयनीयपर्य्यन्तद्विगुणविन्यस्तेऽस्तसकल विग्रहहारं भुजे दिङ्मुखविसर्पिणि स्वदेहप्रभाविताने विततमणिमयूखे घर्मसमयसुभगे सरसीव मृदुमृणालजटिले सराजकं

रममाणान्तेज:परमाणुभिरिव केवलैर्निर्मितमनिच्छन्तमपि बला-
दारोपयितुमिव सिंहासनं सर्वावयवेषु सर्वलक्षणैर्गृहीतं गृहीत-
ब्रह्मचर्य्यमप्यालिङ्गितराजलक्ष्म्या प्रतिपन्नासिधाराधरणमप्य-
विसम्वादिनं राजर्षिं विषमराजमार्गपदस्खलनभियेव सलग्न
न्धर्मे सर्वभूपालपरित्यक्तेन भीतेनेव लज्ज्या च सर्वात्मना सेव्यमानं
सत्येन आसन्नवारविलासिनीप्रतियातनाभिश्चरणनखमयूखपा-
तिनीभिरिव दिग्वधूभि: प्रणम्यमानदीर्घैर्दिगन्तपातिभिर्दृष्टि-
पातै र्लोकपालानां कृताकृतकिमत्यवेक्षमाणं मणिपादपीठप्रति-
ष्ठितकरेणापरिगमनाभ्यनुज्ञां याच्यमाणमिव दिवसकरेण भूष-
णप्रभासञ्चारणबद्धपर्य्यन्तमण्डलेन प्रदक्षिणीक्रियमाणमिव
सेना: प्रणमद्भिर्गिरिभिर्दूयमानमिव शौर्य्योष्मणा फेनायमानमिव
चन्दनधवलं लावण्यजलधिमुद्वहन्तमेकराज्यौर्जित्येन निजप्रति
बिम्बान्यपि अन्यनृपतिचक्रचूडामणिस्मृतान्यसहमानमिव दर्प-
दु:खासिकया चामरानिलनिभेन बद्धधैव श्वसन्तीं राजलक्ष्मीं
दधानं सकलमिव चतु:समुद्रलावण्यमादायोत्थितया श्रिया
समाश्लिष्टमाभरणकिरणजालजायमानानीन्द्रधनु: सहस्राणीन्द्र
प्रहितप्राभृतानीव लभमानमिवं राज्ञां सम्भाषणेषु परित्यक्त-
मपि मधु वर्षन्तं काव्यकथास्वपीतमपि अमृतमुद्वहन्तं विस्रम्भ-
भाषितेष्वनाकृष्टमपि हृदयं दर्शयन्तं प्रसादेषु निश्चलामपि
श्रियं स्थानस्थानेषु स्थापयन्तं वीरगोष्ठीषु पुलकितेन कपोल-
स्थलेनानुरागसन्देशमिवोपांशुरणश्रियं शृण्वन्तमतिक्रान्त
कलहालापेषु स्नेहदृष्टिमिव दृष्टिमिष्टे कृपाणे पातयन्तं परि-
हासस्मितेषु गुरुप्रतापभीतस्य राजकस्य स्वच्छमाशयमिव
दशनांशुभि: कथयन्तं सकललोकस्थितमपि न्याये तिष्ठन्तमगो-

चरे गुणानामभूमौ भाग्यानामविषये वरप्रदानानामशक्ये आशिषां मार्गे मनोरथानामतिदूरे दैवस्यादिश्यमानम-साध्ये धर्मस्यादृष्टपूर्वे लक्ष्म्या महत्त्वे स्थितं अरुणपादपल्लवेन सुगतमन्धकारमथनेन वज्रायुधनिष्ठुरप्रकोष्ठेन वृषस्कन्धे मास्वद्बिम्बाधरेण प्रसन्नावलोकितेन चन्द्रमुखेन कृष्णकेशेन वपुषा सर्वदेवतावतारमिव एकत्र दर्शयन्तम् अपि च। मांसलमयूखमालामलिनितमहीमण्डले महार्हे माणिक्यमाला-मण्डितमेखले महानीलमये पादपीठे कलिकालशिरसीव सलीलं विन्यस्तवामपदमाक्रान्तकालीयफणाचक्रवालं बाल-मिव पुण्डरीकाक्षं क्षौमपाण्डरेण चरणनखदीधितिप्रतानेन प्रसरता महीं महादेवीपट्टबन्धेनेव महिमान मारोपयन्तं अप्रणतलोकपालकोपेनेवातिलोहितौ सकलनृपतिमाल्यस्खलित-पीतपद्मरागरक्तातपमिव वमन्तौ सर्वतेजस्विमण्डलास्तमय-सन्ध्यामिव धारयन्तौ अशेषराजकुसुमशेखरमधुरसस्रोतांसीव स्रवन्तौ समस्तसामन्तोत्तंससहस्रस्रक्सौरभप्राप्तैर्भ्रमरम-ण्डलैरमित्रोत्तमाङ्गैरिव मुहूर्तमप्यविरहितौ सम्वाहनतत्परा वा श्रियो विकचरक्तपङ्कजवनवासभवनानीव कल्पयन्तौ कलशशङ्खमीनसनाथौ यथाकथितचतुरम्भोधिभोगचिह्नाविव चरणौ दधानं विकटमकरबन्धबन्धुराभ्यां दिङ्नागदन्तमु-सलाभ्यामुद्वेललावण्यपयोधिप्रवाहाभ्यामिव फेनकाङ्कितशो-भाभ्यां रक्तचन्दनद्रुमाभ्यामिव भोगिमण्डलशिरोरत्नरश्मि-रज्यमानमूलाभ्यां हृदयारोपितभूभारणमाणिक्यस्तम्भाभ्यां ऊरुदण्डाभ्यां विराजमानममृतफेनपटलपाण्डुना मेखलामणि-मयूखखचितेन नितम्बव्यासङ्गिना विमलपयोधौतेन नेत्रसूत्रनि-

वेशशोभिना अधरवाससा वासुकिनिर्मोकेणेव मन्दुरान्दोल-
मानमघनेन सतारागणेनोपरिकृतेन द्वितीयाम्बरेण भुवना-
भोगमिव भासमानमिभपतिसहस्रोल्लेखकठिनमसृणितेनाप-
र्याप्तमम्बरप्रथिम्ना विविधवाहिनीसङ्क्षोभसहिष्णुना कैलास-
मिव महास्फटिकतटेनोरःकवाटेन विराजमानं श्रीसरस्वत्यो-
करोवदनोपभोगसूत्रेणेव पातितेन शेषेणेव भुजस्तम्भन्यस्त-
भूभारहरलब्धविश्रान्तिसुखप्रसुप्तेन हारदण्डेन परिवेष्टित-
कन्धरं जीवितावधिगृहीतसर्वस्वमहादानदीक्षाचीवरेणेव
हारमुक्ताफलकिरणनिकरेण प्रावृतवक्षःस्थलं अजितजिगी-
षया बालैर्भुजैरिवापरैः प्ररोहद्भिर्बाहूपधानशायिन्याः श्रियः
कर्णोत्पलमधुधारासन्तानैरिव गलद्भिर्भुजजन्मनः प्रतापस्य
निर्गममार्गैरिवातिक्रामद्भिः केयूररत्नकिरणैरुभयतः प्रसारित-
मणिमयपक्षवितानमिव माणिक्यमहीधरं सकललोकालोक-
मार्गार्गलेन चतुरुदधिपरीखोपखातशातकुम्भशिलाप्राकारेण
सर्वराजसिंहबन्धपञ्जरेण भुवनलक्ष्मीप्रवेशमङ्गलमहामाणि-
क्यतोरणेन नातिदीर्घेण दोर्दण्डयुगलेन दिशां दिक्पालानाञ्च
युगपदार्त्तिमपहरन्तं सौन्दर्यलक्ष्मीचुम्बनलोभेन कौस्तुभमणे-
रिव मुखावयवताङ्गतस्याधरस्य गलता रागेण पारिजातपल्लव-
रसेनेव सिञ्चन्तं दिङ्मुखानि अन्तरान्तरा सुहृत्परिहासस्मितैः
प्रकीर्यमाणविमलरदनकिरणशिखाप्रतानैः प्रकृतिमूढाया
राजभिः प्रज्ञालोकमिव दर्शयन्तं मुखजनितेन्दुसन्देहागतानि
कुमुदवनानीव प्रेरयन्तं स्फुटधवलदशनपङ्क्तिभिः क्षतकुमुदवन-
शङ्काप्रविष्टां शरत्ज्योत्स्नामिव विसर्जयन्तं मदिरामृतपारि-
जातगन्धगर्भेण भरितसकलककुभा मुखामोदेनामृतमथनदिव-

समिव सृजन्तं विकचमुखकमलकर्णिकाकोशेनानवरतपीय-
मानश्वाससौरभलोभेनेवाधोमुखेन नासावंशेन शोभमानश्म-
श्रुः क्षीरस्निग्धधवलस्य धवलिम्ना दिङ्मुखान्यपूर्ववदनचन्द्रो-
दयोद्वेलक्षीरोदप्लावितानीव कुर्वाणं विमलकपोलफलकप्रति-
बिम्बिताश्चामरग्राहिणीर्विगृहीतामिव मुखाधिवासिनीं सर-
स्वतीं दधानं अरुणेन चूडामणिशोचिषा सरस्वतीर्ष्याकुपित-
लक्ष्मीप्रसादनप्रणामलग्नचरणालक्तकेनेव लोहितायतलला-
टतटमापाटलांशुतन्तुतन्त्रीसन्तानवलयिनीं कुण्डलमणि-
कुटिलकोटिबालवीणामनवरतचलितचरणानां वादयता-
मुपवीणायतामिव स्वरव्याकरणविवेकविशारदानां श्रवणा-
वतंसमधुकरकुलानां कलकलरणितमाकर्णयन्तं उत्फुल्ल-
मालतीमयेन राज्यश्रियः कचग्रहलीलालग्नेन नखज्योत्-
स्नाधवलेनेव मुखशशिपरिवेषमण्डलेन मुण्डमालामण्डनेन
परिकलितकेशान्तं शिखण्डकाभरण इव मुक्ताफलालोकेन
मरकतमणिकिरणकलापेन चान्योन्यसंवलनमुद्रितप्रचयेन
प्रयागप्रवाहवेणिकावारिणेवागत्य स्वयमभिषिच्यमानं श्रम-
जलविलीनकृष्णागुरुतिलककल्पितेन कालिम्ना प्रार्थनाचार-
चतुरचरणहतश्यामिकाकिरणेनेव नीलायमानललाटलेख-
नाभिः क्षुभितमानसोद्गतैरुत्कलिकाकलापैरिव हारैरुल्लसद्भि-
रवष्टभ्यमानाभिर्विलासवल्गनचटुलैर्भ्रूलताकम्पैरीर्ष्यया श्रिय-
मिव तर्जयन्तीभिरायामिभिः श्वसितैरविरलपरिमलैर्मलयमा-
रुतमयैः पाशैरिवाकर्षन्तीभिर्विकटबकुलावलीवराटकवेष्टित-
मुखैर्हद्भिः स्तनकलशैः स्वदारसन्तोषमिवानवशेषमुद्धरन्तीभिः
कुचोत्कम्पिकाविकारप्रेङ्खितानान्तरलमणीनां रश्मिभिराकृष्य-

माणाहृदयमिव हठात्प्रवेशयन्तीभिः प्रभामुखामाभरणमणीनां मयूखैः प्रसारितैर्वा भूमीरिवालिङ्गयन्तीभिर्जृम्भानुबन्धबन्धुरवदनारविन्दावरणीकृतैरुत्तानैः करकिसलयैः सरभसप्रधावितानि मानसानीव रुध्यन्तीभिर्मदान्धमधुकरकुलकीर्यमाणकर्णकुसुमरजःकणकूणितकोणानि कुसुमशरशरप्रहारमूर्च्छामुकुलितानीव लोचनानि सचतुरं सञ्चारयन्तीभिरन्योन्यमत्सराद्राविर्भवद्भ्रूभ्रुकुटीविभ्रमरचितैः कटाक्षैः कर्णोत्पलैरिव ताड़यन्तीभिरनिमिषदर्शनसुखरसराशिमधुरितपक्ष्मणा चक्षुषा पीतमिव कोमलकपोलपालीप्रतिबिम्बितं राजानं वहन्तीभिरभिलाषलीलानिर्निमित्तस्मितैश्चन्द्रोदयानीव मनस्सु पर्वकार्याणि सम्पादयन्तीभिरङ्गभङ्गवलनान्योन्यघटितोत्तानकरवेणिकाभिः स्फुटनखमुखाङ्गुलीकाण्डकुण्डलीक्रियमाणनखद्रीधितिनिभेनाकिञ्चित्करकामकार्मुकाणि रुषा भञ्जन्तीभिर्वारविलासिनीभिर्विलिप्यमानसौभाग्यमिव सन्ततस्पर्शस्विन्नवेपमानकरकिसलयचरणारविन्दाश्वरणग्राहिणीं विहस्य कोणेन लीलालसं शिरसि ताड़यन्तमनवरतकरतलकलितकोणतया चात्मनः प्रियां वीणामिव श्रियमपि शिक्षयन्तमनिस्नेह इति खलैरनाश्रय इति दोषैर्निग्रह इति चरितैर्निग्रह इति विचिरितीन्द्रियैर्दुरुपसर्प इति कलिना नीरस इति व्यसनैर्भूरिरित्ययशसा दुर्गह इति चित्तवृत्तिरिति चित्तभुवा स्त्रीपर इति सत्यापवादैः सुहृद्भिः कर्मकर इति विप्रैरसहाय इति शत्रुयोधैरेकमप्यनेकधा गृह्यमाणं शान्तनोर्महावाहिनीपतिर्भीष्मार्जित-काशिकद्रोणाञ्चापलालसं गुरुपुत्रादमोघमार्गणं कर्णाच्छिन्नप्रियं युधिष्ठिरात् बहुप्रग्भीमादनेकनागायुतबलं धनञ्जयान्महाभारतरणयोग्यं कार-

णमिव कृतयुगस्य जीवमिव बुधसर्गस्य उत्पत्तिद्वीपमिव दर्पस्य एकागारमिव करुणायाः प्रतिवेशमिव पुरुषोत्तमस्य खनिपर्वतमिव पराक्रमस्य सर्वविद्यासङ्गीतगृहमिव सरस्वत्याः द्वितीयामृतमथनमिव लक्ष्मीसमुत्थानस्य बलदर्शनमिव वैदग्ध्यस्य सर्वावस्थानमिव स्थितीनां सर्वकथनमिव कान्तेरपवर्गमिव रूपपरमाणुसर्गस्य सकलदुश्चरितप्रायश्चित्तमिव राज्यस्य सर्वबलसन्दोहावस्कन्दमिव कन्दर्पस्य उपायनमिव पुरन्दरदर्शनस्यान्तर्धानमिवाधर्मस्य कन्यान्तःपुरमिव कलानां परं प्रेमाणमिव सौभाग्यस्य राजसर्गसमाप्तावभृथस्नानदिवसमिव सर्वप्रजापतीनां रत्नाकरमिव गम्भीरञ्च प्रसन्नञ्च त्रासजननञ्च रमणीयञ्च कौतुकजननञ्च पुण्यञ्चक्रवर्तिनं हर्षदेवमद्राक्षीत्।

दृष्ट्वानुगृहीतइव साभिलाषइव तृप्तइव रोमाञ्चमुखेन मुञ्चन्नानन्दाश्रुबिन्दून्दूरादेव विस्मयस्मेरमुखः समचिन्तयत्। सोऽयं सुमान् सुजन्मा सुगृहीतनामा तेजसां राशिश्चतुरुदधिकेदारकुटुम्बी भोक्ता ब्रह्मस्तम्बफलस्य सकलादिराजचरितजयज्येष्ठमल्लोदेवः परमेश्वरोहर्षः। एतेन खलु राजन्वती पृथ्वी नास्य हरेरिव वृषविरोधिनी बालचरितानि न पशुपतेरिव दक्षजनोद्वेगकारिणी ऐश्वर्यविलसितानि न शतक्रतोरिव गोत्रविनाशपिशुनाः प्रवादाः न यमस्येवातिवल्लभानि दण्डग्रहणानि न वरुणस्येव निस्त्रिंशग्राहसहस्ररक्षिता रत्नालयाः न धनदस्येव निष्फलाः सन्निधिलाभाः न जिनस्येवार्थशून्यानि विज्ञानदर्शनानि न चन्द्रमसइव बहुलदोषोपहताः श्रियः चित्रमिदमित्यमरराजत्वं अपिच। अस्य त्यागस्यार्थिनः प्रजाः शास्त्राणि कवित्वप्रवाचः सत्यस्य साह-

सस्थानान्युग्राहस्य व्यापाराः कीर्त्तेर्दिङ्मुखान्यनुरागस्य लोक-हृदयानि गुणगणस्य सङ्ख्याः कौशलस्य कलानपर्याप्तो विक्रमः यस्मिंश्च राजनि यतीनां योगपट्टकापुस्तककर्मणां पार्थिवविग्रहः षट्पदानां दानग्रहणकलहोऽत्तानां पादच्छेदोऽष्टापदानाञ्चतुरङ्गकल्पना पन्नगानां द्विजगुरुद्वेषो वाक्यविदामधिकरणविचारइति समुपसृत्योपनीति स्वस्तिशब्दमकरोत् ।

अथोत्तरेण नातिदूरे राजाधिपस्य गजपतिपरिचारिकस्तारमधुरमपरवक्त्रमुच्चैरगायत् ।

करिकलभ ! मुञ्च लोलताञ्चर विनयव्रतमानताननः ।
मृगपतिनखकोटिभङ्गुरो गुरुरुपरिक्रमते न तेऽङ्कुशम् ॥

राजा तु तच्छ्रुत्वा दृष्ट्वा च तं गिरिगुहागतसिंहबृंहितगम्भीरेण स्वरेण पूरयन्निव नभोभागमपृच्छत् । किमेष स बाण इति देव ! यथाज्ञापयसीति विज्ञापितो दौवारिकेण नतवादे तं कृतप्रसादं पश्यामि तिर्यङ्नीलधवलांशुशरान्तिरस्करिणीमिव भ्रमयन्नपाङ्गपीयमानतरलतारकस्य यामिनीं चक्षुषः प्रभां परिवृत्यासौ पृष्टस्य पृष्ठतोनिषण्णस्य मालवराजसूनोरकथयत् । महानयम्भुजङ्ग इति तूष्णीम्भावेन गमितनरेन्द्रवचसि तस्मिन्नुद्भूते राजलोके मुहूर्त्तमिव स्थित्वा बाणोऽव्यज्ञापयत् । देव ! अविज्ञाततत्त्वइवाविदितलोकवृत्तान्तइवाकस्माद्देवमाज्ञापयसि स्वैरिणोविचित्राः खलु लोकस्य स्वभावाः प्रवादाश्च । महद्भिस्तु यथार्थदर्शिभिर्भवितव्यम् । नार्हसीमामन्यथा सम्भावयितुमवशिष्टमिव । ब्राह्मणोऽस्मि सोमपीथीनां वंशे वात्स्यायनानां यथाकालमुपनयनादयः कृता मे संस्कारपठितः साङ्गोवेदश्श्रुता-

नि यथार्थक्रियाशास्त्राणि दारपरिग्रहादारभ्याभ्यागारिकोऽस्मि अत्र का भुजङ्गता लोकद्वयातिविरोधिभिश्चापलैः शैशवमशून्यमासीत्। अत्रानपलापोऽस्मि अनेनैव विग्रहितविप्रतिसारमिव मे हृदयं इदानीन्तु घटितइव शान्तचेतसि मनाविव प्रवर्तयितरि वर्णाश्रमव्यवस्थानां इन्द्रइव साक्षाद्दण्डभृति देवे शासति समाम्बुराशिरशनां शेषद्वीपमालिनीं महीं क इवाविशङ्कः सर्वव्यसनबन्धोरविनयस्य मनसाप्यवकाशङ्कल्पयिष्यति। आस्ताञ्च तावन्मानुष्यकोपेतास्त्वत्प्रभावादलिनोऽपि भीताइव मधु पिबन्ति रथाङ्गनामानोऽपि लज्जन्तइव रत्यनुवृत्तिव्यसनैः प्रियाणां कपयोऽपि चकिताइव चपलायन्ते। शरारवोऽपि सानुक्रोशाइव श्वापदाः पिशितानि भुञ्जन्ते। सर्वथा कालेन मां शास्यति स्वामी स्वयमेवानपायिन्यश्चित्तवृत्तिग्राहिण्यो भवन्ति प्रभावतां प्रकृतय इत्यभिधाय तूष्णीमभूत्।

भूपतिरप्येवमस्माभिरपि श्रुतमित्येतावदभिधाय तूष्णीमभूत्। सम्भाषणासनदानादिना प्रसादेन नैनमन्वग्रहीत्। केवलामृतवृष्टिभिः स्नपयतेव स्नेहगर्भेण दृष्टिपातमात्रेणान्तर्गतां प्रीतिमकथयत्। अस्ताचलाभिलाषिणि लम्बमाने सवितरि तीर्थाय विसर्जितराजलोको नरपतिरभ्यन्तरं प्राविशत्। बाणोऽपि निर्गतधौतारकूटकोमलातपत्विषि निर्वाति वासरे अस्ताचलकूटकिरीटे निचुलमञ्जरीभासि तेजांसि मुञ्चति वियन्मुचि मरीचिमतिरोमन्थमन्थरमुखकुरङ्गकदम्बकाध्यास्यमानवट्टीषु गोष्ठीनपृष्ठासु अरण्यस्थलीषु शोकाकुलकोककामिनीकूजितकरुणासु तरङ्गिणीतटीषु वासविटपोपविष्टचाटचटकचक्रवादेषु आलवालावर्जितसेकजलकूटेषु निष्कूटेषु दि-

वसतिविहृतिप्रत्यागतं प्रस्नुतस्तनं स्तनन्धये धयति धेनुवर्गमुन्नत-
क्षीरं क्षुधिततर्णकव्राते क्रमेण च मन्दरधराधरधातुधुनीधु-
प्लावितइव लोहितायमानमहीसीम्नि मज्जति सन्ध्यासिन्धुयान-
पात्रे पतङ्गमण्डले कमण्डलुजलशुचिशयचरणेषु चैत्यप्रण-
तिपरेषु पाराशरीषु पात्रपवित्रपाणौ प्रकीर्णबर्हिषि प्रोत्ते-
जसि जातवेदसि हवींषि वषट्कुर्वति याजकजने निद्रा
विद्राणद्रोणकाककुलकलितकुलायेषु कापेयविकलकपिकुले-
ष्वारामतरुषु निर्जिगमिषति जरत्तरुकोटरकुटीरकुटुम्बिनि
कौशिककुले मुनिकुलसहस्रविकीर्णसन्ध्यावन्दनोदबिन्दुनिकर-
इव दन्तुरयति सुरपथस्थलीं स्तवीयति निकुरम्बे अम्बराश्र-
यिणि शर्वरीशिखण्डे खण्डपरशुकण्ठकाले कवलयति ज्योतिः-
शेषं सान्ध्यमन्धकारावतारे तिमिरतर्जननिर्गतासु दहनप्रविष्ट-
दिनकरकरशाखास्विव स्खलन्तीषु दीपलेखासु झरीसंपुटसं-
पातपटुरटककथिताट्टत्तिषु गोपुरेषु शयनोपजोषजुषि ज-
रति कथितबहुकथे शिशयिषमाणे शिशुजने यममहिषमली-
मसतमसि जनितपुण्यजनजागरे विजृम्भमाणे भीषणतमे त-
मीमुखे मुखरितधनुषि वर्षति शरनिकरमनवरतमशेषसां-
सारिकजनशेमुषीमुषि मकरध्वजे सुरततल्पकल्पनारम्भशो-
भिनि शम्भलिभाषितभाजि भजति भूषाभुजिष्याजने सैरन्ध्री-
बध्यमानरशनाकल्पजल्पाकजघनासु जनीष्विव वशिकविशि-
खाविहारिणीष्वनन्यजानुप्लवासु प्रचलितास्वभिसारिकासु वि-
रलीभवतीनां वरटानां वेशन्तशायिनीनां मञ्जुनि मञ्जीरशि-
ञ्जितजडे जल्पितनिद्राद्राघीयसि द्रावयतीव विरहिहृदयानि-

सारसरसिते भाविवासरालोकबीजाङ्कुर इव विकीर्यमाणे जगति प्रदीपप्रकरे निवासस्थानमगात् ।

अकरोच्च चेतसि दक्षिणः खलु देवो हर्षः यदेवमतीवाप-क्षेपोपनीतकौलीनः कुपितोऽपि मनसा स्निह्यत्येव मयि यथा-कल्पागतः स्वां न मे दर्शनेन प्रसादं कुर्यात् । इच्छति मां गुणवन्तम् । उपदिशन्ति हि विनयमनुरूपप्रतिपत्त्युप-पादनेन वाचा विनापि कर्तव्यानां स्वामिनः । धिङ् मां स्वदोषान्धमनादरभीतम् एवमतीव गुणवति राजन्यन्यथा-चिन्तयन्तम् । सर्वथा तथा करोमि यथा यथास्थितं जानाति मां कालेनायमित्यवधार्य चापरेद्युर्निष्क्रम्य कटकात् सुहृदां बान्धवानाञ्च भवनेषु तावदतिष्ठत् । यावदस्य स्वयमेव गृही-तस्वभावः पृथ्वीपतिप्रसादवानभवत् । प्रविशश्च पुनरपि नरपतिभवनमल्पैरेवाहोभिः परं प्रीतेन प्रसादजन्मनो मह-मानस्य प्रेम्णा विस्रम्भस्य द्रविणस्य नर्मणः प्रभावस्य च परकोटि-मनीयत नरेन्द्रेणेति ।

इति श्रीहर्षचरिते द्वितीयोच्छ्वासः ।

# तृतीयोच्छ्वासः ।

---

निजवर्षादिव स्नेहा बहुभक्तजनान्विताः ।
सुकालादिव जायन्ते प्रजाः पुण्येन भूभृतः ॥
साधूनामुपकर्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुम् ।
न कुतूहलि कस्य मनश्चरितञ्च महात्मनां श्रोतुम् ॥

अथ कदाचिद्विरलितवलाहके चातकातङ्ककारिणि रणत्कादम्बकदम्बके दर्दुरद्विषि मयूरमदमुषि हंसपथिकसार्थसर्वातिथौ धौतासिनिभनभसि भासुरभास्वति शुचिशशिनि तरुणतरतारागणे गलत्शुनासीरशरासने सीदत्सौदामिनीदामनि दामोदरनिद्राद्रुहि द्रुतवैदूर्यसवर्णार्णसि घूर्णमानमिहिकाल घुमोच्चमोघवति निमीलन्नीपे निष्कुसुमकुटजे निर्मुकुलकन्दले कोमलकमले मधुस्यन्दीन्दीवरे कह्लाराह्लादिनीशेफलिनीशीतलिनीशिशिनीनिशीथयूथिकामोदिनि मोदमानकुमुदावदातदशदिशि सप्तच्छदधूलीधूसरितसमीरे स्तबकितबन्धूकबध्यमानाकाण्डसन्ध्ये नीराजितवाजिनि उन्मदहन्तिदर्पवीचके क्षीणपङ्कचक्रचक्रवाले बालपुलिनपल्लवितसिन्धुरोधसि परिणामदाश्यानश्यामाके जनितप्रियङ्गुमञ्जरीरजसि क-

ठोरितत्रपुसत्वचि कुसुमस्मेरशरे शरत्समयारम्भे जृम्भमाणे राजसमीपमगात्।

बाणोबन्धून्द्रष्टुं पुनरपि तं ब्राह्मणाधिवास मगमत्। सकलभूपालसम्मानातिशयपरितुष्टाः सत्वस्य ज्ञातयः श्लाघमाना अभिययुः। क्रमेण च कांश्चिदभिवादयन् कैश्चिदभिवाद्यमानः कांश्चिन्मूर्ध्नि समाजिघ्रन् कैश्चिच्छिरसि चुम्ब्यमानः कांश्चिदालिङ्गन् कैश्चिदालिङ्ग्यमानः अन्यैराशिषानुगृह्यमाणोऽपरानमनुगृह्णन्नाशिषा बहुबन्धुमध्य मध्यासीनः परं मुमोद। सम्भ्रान्तपरिजनोपनीतमासनमासीनेषु गुरुषु भेजे भजमानश्चास्यातिसत्कारमतितरान्ननन्द। प्रीयमाणेन स मनसा सर्वांश्च तान् पर्यपृच्छत्। कच्चिदेतावंतोदिवसान् निवसन्ति सुखिनो यूयम्। अप्रत्यूहा वा सम्यक्करणपरितोषितद्विजातिचक्राक्रीता विक्रीयते क्रिया यथावदविकलमन्त्रविकल्पभाञ्जि भुञ्जते वा हवींषि हुतभुजः यथाकालमधीयन्ते वा वटवः। प्रतिदिनमविच्छिन्नो वा वेदाभ्यासः कच्चित्तवेयश्चिरन्तनो यज्ञविद्याकर्मण्यभियोगः। तान्येव व्याकरणे परस्पर्द्धानुबन्धीनि अवरस्य दिवसदर्शिताद्राणि व्याख्यानमण्डलानि सैव वा प्राक्तनपरित्यक्तान्यकर्तव्याप्रमाणगोष्ठी स एव वा मन्दीकृतेतरशास्त्रार्थरसो मीमांसायामतिरसः कच्चित्तएव वाभिनवसुभाषितसुधावर्षिणः काव्यालापइति। ते त मूचुः। तात! सततसन्तोषजुषां सन्निहितविद्याविनोदानां वह्निमात्रसहायानां कियन्मात्रया नः कर्तव्यं सुखितया सकलभुवनभुजि भुजङ्गराजदीर्घे रक्षति क्षितिक्षितिभुजो भुजे सदा सुखिनएव वयम्। विशेषेण त्वयि विमुक्तकौटिल्ये परमेश्वरपार्श्ववर्तिनि वेत्रासनमधितिष्ठति सर्वे

च यथाशक्ति यथाविभवं यथादिवसं यथाकालञ्च सम्पाद्यन्ते विप्रजनोचिताः क्रियाकलापा इति। एवमादिभिरालापैः स्कन्धावारवार्ताभिश्च शैशवातिक्रान्तक्रीडानुस्मरणैश्च पूर्वजन्मकथाभिश्च तैः सह सुखमतिष्ठत्।

उत्थाय च मध्यन्दिने यथाक्रियमाणाः स्थितीरकरोत् भुक्तवन्तञ्च तं सर्वे ज्ञातयः पर्यवारयन्। अत्रान्तरे दुकूलपट्टप्रभवे शिखण्डगण्डाङ्गशबले पौण्ड्रे वाससी वसानः स्नानावसानसंमार्जितया तीर्थमृदा गोरोचनया चारचिततिलकस्तैलामलकमसृणितमौलिरनुस्वचूड़ाचुम्बिना आपीडेन समुद्भासमानः सकृदुपभुक्तताम्बूलविरलाधररागकान्तिरेकशलाकाञ्जनजनितलोचनरुचिरचिरभुक्तो विनीतमार्यवेषन्दधानः पुस्तकवाचकः सुदृष्टिराजगाम। नातिदूरवर्तिन्याञ्चासन्नायां भूमौ निषसाद। मुहूर्त्तमपि स्थित्वा तत्कालापनीतसूत्रवेष्टनमपि नखकिरणैर्दुकूलसूत्रैरिव वेष्टितं पुस्तकं पुरोनिहितशरशलाकायन्त्रके निधाय पृष्ठतः सनीडसन्निविष्टाभ्यां मधुकरपारावताभ्यां वांशिकाभ्यां दत्ते ताने प्राभातिकपाठच्छेद-च्छ्वीकृतमनन्तरं पत्रमुत्क्षिप्य गृहीत्वा कतिपयपत्रलघ्वीं कवलिकां प्रक्षालयन्निव मषीमलिनान्यक्षराणि दन्तकान्तिभिरर्चयन्निव सितकुसुममुक्तिभिर्ग्रन्थं मुखसन्निहितसरस्वतीनूपुरस्खलनरवैरिव पदैर्गमकैर्मधुरैराक्षिपन्मनांसि श्रोतॄणामन्त्योपवनप्रोक्तं पुराणं पपाठ। तस्मिंश्च यथाश्रुतिसुभगगीतिगर्भं पठति सुदृष्टौ नातिदूरवर्ती सूचिबाणो वन्दी तारमधुरेण गीतध्वनिमनुवर्तमानः स्वरेणेदमार्यायुगलमगायत्।

तदपि मुनिगीतमतिपृथु तदपि जगद्व्यापि पावनन्तदपि।
हर्षचरितादभिन्नं प्रतिभाति हि मे पुराणमिदम्॥

वंशावसामप्रयोगललितमुखा गणपतिरधिपतिस्तारापतिः श्यामलद्युत्यनुगमविधाविस्फुटकरणं भरतमार्गभजनगुरु।

श्रीकण्ठान्निर्यातं गीतमिदं हर्षराज्यमिव। तच्छ्रुत्वा बाणस्य हारः पितामहमुखपद्मा इव वेदाभ्यासपवित्रितमूर्तय उपाया इव सामप्रयोगललितमुखा गणपतिरधिपतिस्तारापतिः श्यामलइति पितृव्यपुत्राः भ्रातरः प्रसन्नप्रवृत्तयो गृहीतवाक्याः कृतगुरुन्यासा न्यायवादिनः सुकृतसंगृहीताभ्यासगुरवो लब्धसाधुशब्दालोकइव व्याकरणे सकलपुराणराजर्षिचरिताभिज्ञामहाभारतभावितात्मानो विदितसकलेतिहासा महाविद्वांसो महाकवयो महापुरुषा विद्वांसो वृत्तान्तकुतूहलीनाः सुभाषितश्रवणरसायनवितृष्णा वयसि यशसि वचसि तपसि सदसि महसि वपुषि यजुषि प्रथमाः पूर्वमेव कृतसङ्केता विवक्षवो विलक्षस्मितसुधाधवलितकपोलोदराः परस्परस्य मुखानि व्यलोकयन्।

अथ तेषां कनीयान् कमलदलदीर्घलोचनः श्यामलो बाणस्य प्रेयान् प्राणानामतिशायितोदन्तसंन्यस्तैः सप्रणयं दर्शनज्योत्स्नास्नपितककुभो मुखेन्दुना बभाषे। तात! बाण द्विजानां राजा गुरुग्रहणमकार्षीत्। पुरूरवा ब्राह्मणद्रविणतृष्णयादधितेनायुषा व्ययुज्यत। नहुषः परकलत्राभिलाषितो महान् भुजङ्गएवासीत्। ययातिराहितब्राह्मणीपरिग्रहः पपात। सुद्युम्नस्त्रीमय एवाभवत् सोमकस्य प्रख्याता जगति जन्तुबधनिर्घृणता मान्धाता मार्गणव्यसनेन सपुत्रपौत्रोरसातलमगमत्।

पुरुः कुत्सः कुत्सितं कर्म तपस्विन्यपि मेखलकन्यकायामकरोत् । कुवलयाश्वो भुजङ्गलोकपरिग्रहादश्वतरकन्यामपि न परिजहार । पृथुः प्रथमपुरुषपरिभुक्तां परिभुक्तवान् पृथिवीं नृगस्य कृकलासभावेऽपि वर्णसङ्करः समदृश्यत । सौदासेन रक्षिता पर्याकुलीकृता क्षितिः । नलं वश्याक्षहृदयं कलिरभिभूतवान् संवरणोऽपि मित्रदुहितरि विक्लवतामगमत् । दशरथोऽपीष्टराम उन्मादेन मृत्युं जगाम । कार्तवीर्योऽपि गोब्राह्मणनिपीडनेन निधनमयासीत् । मरुत्तइष्टबहुसुवर्णको देवगुरुद्विजानां च बहुमतो न बभूव । शन्तनुरतिव्यसनादेकाकी वियुक्तो महावाहिन्या विपन्नो विललाप, पाण्डुर्वनमध्यगतोमत्स्य इव मदनरसाविष्टः प्राणान्मुमोच, युधिष्ठिरश्च उभयनिषण्णहृदयः समरशिरसि सत्यमुत्सृष्टवान् । इत्थमस्ति राज्ञस्त्वनपमतकलङ्क ऋते देवादखिलद्वीपभुजो हर्षात् । अस्य बह्वन्याश्चर्याणि श्रूयन्ते । तथाहि । अत्र खलु जिता निश्चलीकृताश्चलन्तः कृतपक्षाः क्षितिभृतः अत्र प्रजापतिना शेषभोगिमण्डलस्योपरि क्षमाकृता अत्र बलिनापि रोचितभूभृद्दृष्टिनी मुक्तो नागः अत्र देवेनाभिमुक्तः कुमारः । अत्र स्वामिनैकप्रहारपातिताऽचला ख्यापिता शक्तिः । अत्र नरसिंहेन स्वहस्तविशसितारातिना प्रकटीकृतो विक्रमः । अत्र परमेश्वरेण तुषारशैलभुवो दुर्गायाः गृहीतः करः । अत्र लोकनाथेन दिङ्मुखेषु परिकल्पिता लोकपालाः सकलभुवनकोशस्याग्रजन्मनां विभक्ताः । इत्येवमादयः प्रथमकृतयुगस्येव दृश्यन्ते महान्तः समारम्भाः । यचास्य सुगृहीतनाम्नः पुण्यराशेः पूर्वपुरुषवंशानुक्रमेणादितः प्रभृति चरितमिच्छामि श्रोतुम् ।

सुमहान् कालो नः शुश्रूषमाणानां अयस्कान्तमणयइव लोहानि नीरसानि निष्ठुराणि खलानामप्याकर्षन्ति मनांसि महतां गुणाः। किमुत स्वभावसरलमृदूनीतरेषाम्। कस्य द्वितीये महाभारतइव भवेऽस्य चरिते कुतूहलमापादितवान्। भवतु भार्गवोऽयं वंशः शुचिरनेन पुण्येन राजर्षिचरितश्रवणेन सुतरामशुचिरित्येवमभिधाय तूष्णीमभूत्।

बाणस्तु विहस्याब्रवीत् आर्य! न युक्तरूपमभिहितं अघटमानमनोरथमिव भवतां कुतूहलं कल्पयामि। अल्पाल्पपरिसंख्यानशून्या प्रायेण स्वार्थपरतां परगुणानुरागिणी प्रियजनगुणकथाश्रवणरसरभसशोभिता च मन्ये महतामपि मतिमपहरति विवेकम्। पश्यत्वार्य! क्व परमाणुपरिमाणमल्पहृदयं क्वामा समस्तब्रह्माण्डव्यापि देवस्य चरितं क्व परिमितवर्णवृत्तयः कतिपये शब्दाः क्व संख्यातीतास्ते गुणाः सर्वज्ञस्याप्यविषयो वाचस्पतेरप्यगोचरः सरस्वत्या अप्यतिभारः किमुतास्मद्विधस्य कः खलु पुरुषायुषशतैरपि शक्नुयादविकलमस्य चरितं वर्णयितुम्। एकदेशे यदि कुतूहलमस्ति सज्जा वयम्। अधिगतकतिपयाक्षरलवलघीयसी जिह्वा चोपयोगं गमिष्यति भवन्तं श्रोतारं वर्णयते हर्षचरितं कृतमन्यत्। अद्य तु परिणतप्रायो दिवसः पर्यस्यमानकपिलकिरणजटाभारभासुरो भगवान् भार्गवो रामइव समन्तपञ्चकरुधिरमहाह्रदे निमज्जति रक्ता-रागपटले पूषा श्वो निवेदयामीति सर्वे च तथैव प्रत्यपद्यन्त नातिचिरमुत्थाय सन्ध्यामुपासितुं शोणतटमयासीत्।

अथ मधुमदमुदितमालवीकपोलतलकोमलातपे मुकुलिते पक्ष्मकमलिनीमिलनादिव लोहिततमे तमोलिपि लम्बमाने

रवौ रविरथतुरङ्गममार्गमार्गानुसारेण यममहिषमिव धावति तमसि नभसि क्रमेण म्रदृतापकुटीरकपटावलम्बिषु रक्तातपच्छदेष्विव छतेषु वल्कलेषु कलिकलुषमुषि गगनतलमग्निहोत्रधामधूमे सनियमे यजमाने मौनव्रतिनि विहारवेलालोले पर्यटति पत्नीजने विकीर्यमाणहरिश्यामकयालीपूलिकासु इध्मासु होमकलिकासु हूयमाने वैताने तनूनपाति पूतविष्टरे कृष्णाजिनजटिले जटिनि जपति मुनिजने ब्रह्मासनाध्यासिनि योगिगणे तालध्वनिधावमानान्तेवासिन्यलघुवृद्धश्रोत्रियानुमते गलद्ग्रन्थखण्डकोद्गारिणि सन्ध्यामवधीरयति दरे वटुजने समाजे समुन्मीषति ज्योतिषि तारकाख्ये प्राप्ते प्रदोषारम्भे भवनमागत्योपविष्टस्निग्धैर्बन्धुभिः सार्धं तयैव गोष्ठ्या तस्थौ नीतप्रथमयामश्च गणपते भवने परिकल्पितं शयनमसेवत दूरेषान्तु सर्वेषान्निमीलितनयनानामप्यनुपजातनिद्राणां कमलवनानामिव सूर्योदयं प्रतिपालयताम्। कुतूहलेन सा चपाचयगगमत्।

अथ यामिन्यास्तुरीये यामे प्रतिबुद्धः सएव वन्दी श्लोकद्वयमगायत्।

पश्चादङ्घ्री प्रसार्य त्रिकनतिविततन्द्राघयित्वाङ्गमुच्चै-
रासज्याभुग्नकण्ठोमुखमुरसि सटाधूमधूम्रा विधूय।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितक्ष्माङ्कुरेण॥
कुर्वन्नाभुग्नपृष्ठोमुखनिकटकटीकन्धरोमा तिरश्चीम्
लोलेनाहन्यमानस्तुहिनकणमुचा चञ्चता केसरेण।
निद्राकण्डूकषायं कषति निविडितः श्रोत्रशुक्तिस्तुरङ्ग

स्वकृत्य द्वाग्रलग्नप्रतनुबुसगणाङ्कोणमध्याः खुरेण ॥

बाणस्तु तच्छ्रुत्वा समुत्सृज्य निद्रामुत्थाय च प्रक्षाल्य वदनमुपास्य भगवतीं सन्ध्यामुदिते भगवति सवितरि स्पृष्टीतताम्बूलस्तत्रैवातिष्ठत्। अत्रान्तरे सर्वे अस्य भ्रातरः समाजग्मुः। परिवार्याशाञ्चक्रिरे। असावपि पूर्वोद्घातेन विदिताभिप्रायस्तेषां पुरो हर्षचरितं कथयितुमारेभे श्रूयताम्।

यस्मिन् पुण्यकृतामधिवासो वासव इव वसुधामवतीर्णः सततमसङ्कीर्णवर्णव्यवहारस्थितिः कृतकृतयुगव्यवस्थः स्थलकमलवनबहुलतया पातं मुच्यमानस्वर्णालैरुन्मीलन्मेदिनीसारगुणैरिव कृतमधुकरकुलकोलाहलैर्हलैरुल्लिख्यमानक्षेत्रक्षीरोदपायिपयोदसिक्ताभिरिव पुण्ड्रेक्षुवाटसन्ततीभिर्निरन्तरः प्रतिदिशमपूर्वपर्वकैरिव खलधानधामभिर्विभज्यमानैः सस्यकूटैः सङ्कटसीमान्तः समन्तादुद्घाटितयन्त्रजलसिच्यमानैर्जीवकच्छकैर्जटालम्भितवर्षरावरीयोभिः शालेयैरलङ्कृतः पाकविशरारुराजमाषनिकरकर्बुरैः स्फुटितमुद्गफलकौशिकपिशितैश्च परिणतगोधूमधामभिः स्थलीपृष्ठैरधिष्ठितोऽभितपष्ठप्रक्रुष्टितगायद्गोपालबालकैः किल पटबलाकानुसृतैर्वटुघटितकुटीघटितरमणीयैरटविरटवीं हरवृषभपीतमामयाशङ्कया बहुधाविभक्तं क्षीरोदमिव क्षीरं क्षरद्भिर्बाष्पच्छेदान्यगात्रमैर्गोधनैर्धवलितविपिनो विविधमखक्षोमधूमान्धगतमन्युमुक्तैर्लोचनैरिवसहस्रसंख्यैः कृष्णसारैः शारिनोद्दे शोधवलधूलीमुचां केतकीवनानां रजोभिः पाण्डुरीकृतैः प्रमथोद्धूलनभस्मधूसरैः शिवपुरस्येव प्रदेशैरुपशोभितः श्यामाककदलितग्रामोपकण्ठकाश्यपीपृष्ठः पदे पदे करपालकैः फलपल्लवप्रस्फोटितैः करपुट-

कोमलमातुलुङ्गीदलरसोपलिप्तैः स्वेच्छाविरचितकुसुमके-
सरपुष्पप्रकरैः प्रत्यग्रफलरसपानसुखप्रसुप्तपथिकैर्वनदेवतादी-
यमानामृतरसप्रपागृहैरिव द्राक्षालतामण्डपैरुपशोभितः स्फु-
टत्फलानाञ्च बीजलग्नशुकचञ्चुरागाणामिव समारूढकपिकु-
लकपोलसंदिह्यमानकुसुमानां दाडिमीनां वनैर्विलोभनीयोप
निर्गमोवनपालपीयमाननालिकेररसासवैश्च पथिकलोकलिप्य-
मानपिण्डखर्जूरैर्गोलाङ्गूलगृह्यमाणमधुरमोचापिण्डरसैश्चकोर-
चञ्चूजर्जरितैर्लावनैरभिरामस्तुङ्गार्जुनपाटलिपालिपरिक्षितैश्च गो-
कुलावतारकलुषितकुल्यालैरध्वगतशतशरण्यैररण्यजलाशयबन्धै-
रवन्ध्यजनरन्ध्रः कलहायमानकरभीयकुमारकल्प्यमानैरौरकै-
रौरभ्रकैश्च कृतसम्बाधोदिशि दिशि रविरथतुरगविलोभता-
यैव विलुठनमृदितकुङ्कुमस्थलीरसमालिप्यमानानामुत्प्रोथपु-
टैर्मुखैरुदरशायिकिशोरकजवजननएव प्रभञ्जनमापिबन्तीनां
वातहरिणीनामिव स्वच्छन्दचारिणीनां वाडवानां वृन्दै-
र्विहरद्भिर्विराजितोऽनवरतक्रतुधूमान्धकारकृष्णैर्हंसयूथैर्गुणैरिव
धवलितभूतलः सहिताहतमुखरवमन्त्रैर्मयूखैर्विभवैर्मुखरीकृत-
जीवलोकशशिकरावदातदन्तैर्मुक्ताफलैरिवगुणिभिः प्रसाधितः
पथिकजनविलुप्यमानस्फीतफलैर्महातरुभिरिव सर्वातिथिभि-
र्गमनीयो मृगमदपरिमलवाहिभिर्मृगरोमच्छादितैर्हिमवत्पा-
र्श्वैरिव महत्तरैः स्थिरीकृतः प्रोद्दण्डशतपत्त्रपत्रोपविष्टद्विजो-
त्तमैर्नारायणनाभिमण्डलैरिव तोयाशयैर्मण्डितोमथितपयः-
प्रवाहप्रक्षालितक्षितिभिर्मथनारम्भैरिव महाघोषैः पूरिता-
शयः श्रीकण्ठोनाम जनपदः ।

यत्र त्रेताग्निधूमाम्बुजलप्रक्षालिता दूर्वाक्षीयन्त

कुदृष्टयः। पच्यमानचयनेष्टकादहनदग्धानि वनान्यदह्यन्त दुरितानि भिद्यमानयूपदारुपरशुपाटित इव व्यशीर्यताधर्मः मखशिखिधूमजलधाराधौत इव वननाशवर्णसङ्करः। दीयमानानेकगोसहस्रखण्ड्यमान इवापलायत कलिः। सुरालयशिलासंघट्टनटङ्कनिकरनिकृत्ता इव व्यदीर्यन्त विपदः। महादानमहाजनकलकलाभिद्राविता इव प्राद्रवन्नुपद्रवाः। दीप्यमानमहासत्रमहानससहस्रसन्तापिता इव व्यलीयन्त व्याधयः। वृषविवाहप्रहतपुण्यपटहपटुरवत्रासिता इवापासर्पन्नपमृत्यवः सन्ततब्रह्मघोषमुखरिता इवापजग्मुरीतयः। धर्माधिकारपरिभूतमिव च न प्रभाद्दैवम्। तत्र चैवंविधे नानारामाभिरामकुसुमसुरभिगन्धपरिमलसुभगो यौवनारम्भ इव भुवनस्य कुङ्कुममिलनपिञ्जरितकञ्चुकमहिषीसहस्रशोभितोऽन्तःपुरनिवेश इव धर्मस्य मरुदुद्धूयमानचमरीबालव्यजनशतशालितप्रान्तः एकदेश इव सुरराज्यस्य ज्वलन्मखशिखिसहस्रदीप्यमानदशदिगन्तः शिबिरसन्निवेश इव कृतयुगस्य प्रसाधनावहितब्रह्मर्षिध्यानाधीयमानसकलकुशलप्रशमावतार इव ब्रह्मलोकस्य कलकलमुखरमहावाहिनीशतसंकुलो विक्षेप इवोत्तरकुरूणामीश्वरमार्गणासन्तापानभिज्ञसकलजनो विशिष्ट इव त्रिपुरस्य सुधारससिक्तधवलगृहपङ्क्तिपाण्डुरः प्रतिनिधिरिव चन्द्रलोकस्य मधुमदमत्तकाशिनीभूषणरवहरितो भुवनोनामापहार इव कुबेरनगरस्य स्थाण्वीश्वरो नाम जननिवेशः।

यस्य यौवनमिति युवभिः कामायतनमिति वेश्याजनैः सङ्गीतगृहमिति लासकैर्यमनगरमिति शत्रुभिश्चिन्तामणिभूमिरित्यर्थिभिर्वीरक्षेत्रमिति शस्त्रोपजीविभिर्गुरुकुलमिति विद्यार्थिभि-

गान्धर्वनगरमिति गायकैर्विश्वकर्ममन्दिरमिति विद्यार्थिभिर्लोभभूमिरिति वैदेहकैर्धूर्त्तास्थानमिति वन्दिभिः साधुसमागम इति सद्भिर्वज्रपञ्जरमिति शरणागतैर्विदग्धगोष्ठीति विदग्धैः सुकृतपरिणाम इति पथिकैरसुरविवरमिति वादिकैः शाक्यश्रमण इति श्रमिभिरप्सरःपुरमिति कामिभिर्महोत्सवसमाज इति चारणैर्वसुधारेति च विप्रैरग्टह्यत ।

यत्र अनङ्गगामिन्यः शीलवत्यश्च गौर्यो विभवरताश्च श्यामाः पद्मरागिण्यश्च धवलद्विजशुचिवदना मदिरामोदिनिश्वासाश्च चन्द्रकान्तवपुषः शिरीषकोमलाङ्ग्यश्च भुजङ्गागम्याः कञ्चुकिन्यश्च पृथुकलत्रश्रियो दरिद्रमध्यकलिताश्च लावण्यवत्यो मधुरभाषिण्यश्चाप्रमत्ताः प्रसन्नोज्ज्वलसुवर्णाश्च सकौतुकाः प्रौढाश्च प्रमदाः । यत्र प्रमदानां चक्षुरेव सहजं मुण्डमालामण्डनभारः कुवलयदामानि । अलीकप्रतिबिम्बितान्येव कपोलभाञ्जि अश्लिष्टाः श्रवणावतंसाः पुनरुक्तानि तमालकिसलयानि प्रियजनकथा एव सुभगाः कर्णालङ्काराः बाडम्बराकुण्डलादिकपोला एव सततमालोककराः विभवो मणिप्रदीपाः निश्वासाकृष्टं मधुकरकुलमेव रमणीयं कुसुमावरणम् । कुलजनाचारोजालिका वाण्येव मधुरतरा वीणाविज्ञानं तन्त्रीताडनम् । श्वासा एवातिसुरभयः पटवासा निरर्थकाः कर्पूरपांशवः । अधरकान्तिविसर एवोज्ज्वलाङ्गरागः लावण्यतरङ्गः कुङ्कुमपङ्कः । बाहव एव कोमलतमाः परिहासप्रहारलताः निष्प्रयोजनानि मृणालानि यौवनोष्मस्वेदबिन्दव एव विदग्धाः कुचालङ्कृतयो हारास्तु भाराः । श्रोण्य एव विशालशिलातलचतुराः । विभ्रमकरणनिमित्तं भवनमणिवेदिकाः । क-

मललोभनिलीन्यान्येवालिकुलानि मुखराणि पादाभरणानि। शिञ्जानानि नीलमणिनूपुराणि। नूपुररवाकृष्टभवनहंसाय वसमुचिताः सञ्चरणसहायाः ऐश्वर्य्यप्रपञ्चः परिजनः तत्र च साक्षात्सहस्राक्ष इव सर्ववर्णधरश्चतुरुदधिधानोऽविस्मय इव कल्याणप्रकृतित्वे मन्दरमय इव लक्ष्मीसमाकर्षणे जलनिधिमय इव मर्यादायां आकाशमय इव शब्दप्रादुर्भावे शशिमय इव कलासंग्रहे वेदमय इवाशिमालेपे धरणीमय इव लोकधृतिकरणे पवनमय इव सकलपार्थिवरजोविकारापहरणे गुरुर्वचसि विशालो मनसि जनकस्तपसि सूर्य्यस्तेजसि सुमन्त्रो रहसि बुधः सदसि पृथुरुरसि अर्जुनो यशसि भीष्मो धनुषि निषधो वपुषि शत्रुघ्नः समरे शूरसेनाक्रमणे दक्षः प्रजाकर्मणि सर्वादिराजतेजपुञ्जनिर्मित इव राजा पुष्पभूतिरितिनाम्ना बभूव।

पृथुना गौरियं कृतेति स्पर्धमान इव योऽन्यां महिषीमकार। निसर्गवैरिणी स्वहृदयानुरोधिनी भवति महतामपि मतिः। यतः। तस्य केनचिदनुपदिष्टा सहजैः शैशवादिमादारभ्यानन्यदेवताभगवतिभक्तिसुलभे भुवनपति भूतभावने भवच्छिदि भवे भूयसी भक्तिरभूत्। अकृतत्र्यम्बकपूजाविधिर्न स्वप्नेऽप्याहारमकरोत्। अजमजरममरगुरुमसुरपुररिपुमपरिमितगणपतिमचलदुहितृपतिमखिलभुवनकृतचरणानतिं पशुपतिं प्रपन्नोऽन्यदेवताशून्यतया त्रैलोक्यभर्तृचिन्तानुरोधिन्यश्चानुजीविनां प्रकृतयः। तथाहि। गृहे गृहे भगवानपूज्यत खण्डपरशुः। वपुरस्य होमानलज्वालावलीयवकुलगुग्गुलगन्धगर्भाः स्नपनक्षीरशीकरक्षोदचारिणो बिल्वपल्लवदामदलोल्लासिनः पुण्याश्रयेषु वायवः शिवसपर्यासमुचितैरुपायनैः प्राभृत-

कैश्च पौराः पादोपजीविनः सचिवा भुजबलनिर्जिताश्च करदीकृता महासामन्तास्तं सिषेविरे। तथाहि। कैलासकूटधवलैः कनकपत्रलतालङ्कृतविषाणकोटिभिर्महाप्रमाणैः सन्ध्याबलिकुम्भैः सौवर्णैश्च स्नपनकलशैश्चार्घ्यभाजनैश्च धूपपात्रैश्च पुष्पपुटैश्च यष्टिप्रदीपैश्च ब्रह्मसूत्रैश्च महार्हमाणिक्यखण्डखचितमुखैः कोशैश्च परितोषमस्य मनसि चक्रुः। अन्तःपुराण्यपि परस्परमारब्धबालेयतण्डुलखण्डमानि देवगृहप्रलेपेन लोहिततरकरकिसलयानि कुसुमग्रथनव्यग्रसमग्रपरिजनानि तस्याभिलषितमन्ववर्तन्त।

तथा च परममाहेश्वरः स भूपालो लोकतः शुश्राव: भुवि भगवन्तमपरमिव साक्षाद्वृषभध्वजमनन्दाक्षिणात्यं बहुविधविद्याप्रभावप्रख्यातैर्गुणैः शिष्यैरिवानेकसहस्रसंख्यैर्व्याप्तं मर्त्यलोकं भैरवाचार्यनामानं महाशैवम्। उपनयन्ति हि हृदयमदृष्टमपि जनं शीलसम्वादाः। यतः। स राजश्रवणसमकालमेव तस्मिन् भैरवाचार्ये द्वितीय इव कपर्दिनि दूरगतेऽपि गरीयसीं भक्तिं बबन्ध। आचकाङ्क्ष चास्य दर्शनं मनोरथैः सर्वदा। अथ कदाचित् पर्यस्तेऽस्ताचलचुम्बिनि वासमकरेऽन्तःपुरवर्तिनं राजानं उपसृत्य प्रतीहारी विज्ञापितवती। देव! द्वारि परिव्राड् स्थितः। कथयति च भैरवाचार्यवचनाद्देवमनुप्राप्तोऽस्मीति। राजा तु तच्छ्रुत्वा सादरं क्वासौ आनयात्रैव प्रवेशयैनमित्यब्रवीत्। तथा चाकरोत् प्रतिहारी। न चिराच्च प्रविशन्तं प्रांशुमाजानुलम्बभुजं मृदुक्षाममपि स्थूलास्थिभिरवयवैः पीवरत्वानिवोपलक्ष्यमाणं पृथुतमाङ्गमुत्तुङ्गवलिभङ्गस्पृष्टनिमांसगण्डकूपं मधुबिन्दुपिङ्गलमण्डलाक्ष्यमीषदाभुग्नवक्रघोणमतिप्रलम्बकर्णपाशमलाबुबीजविक-

टदीर्घदन्तपङ्क्तिं तुरगानुकारयाधरलेखं लम्बचिबुकायततरवद-नमंसावलम्बिना काषायेण योगपट्टकेन विरचितवैकक्ष्यकर्म हृद-यमध्यनिर्बिडग्रन्थिना च रागोढेन खण्डश: कृतेन धातुरसारुणेन कर्पटेन कृतोत्तरासङ्गं पुनरुक्तबालप्रग्रहवेष्टननिश्चलमूलेन बद्ध-सूत्रपरिशोधनवंशत्वक् अजिनेन कौपीनसनाथशिखरेण कर्प-टसमुद्गगर्भीकृतभिक्षाकपालेन दारुफलकत्रयत्रिकोणत्रियष्टि-निविष्टकमण्डलुना बहिरुपपादितपादुकावस्थानेन स्थूलदशा-सूत्रनियन्त्रितपुस्तकपुलिकेन वामकरधृतेन योगभारकेण त्रि-दण्डेनाध्यासितस्कन्धमितरगृहीतवेत्रासनं मस्करिणमद्राक्षीत्।

क्षितिपतिरुपगतमुचितेनचैनमादरेणान्वग्रहीत्। आसी-नञ्चैनं पप्रच्छ। क्व भैरवाचार्य्य इति। सादरन्नरपतिवचन-मुदितमतिस्तु परिव्राट् तमुपनगरं सरस्वतीतटवनसङ्गिनी-शून्यायतनेस्थितमाचचक्षे। भूयश्चायं बभाषे। वर्द्धयते भगवान् महानुभागमाशीर्वादेनेत्युक्त्वोपनिन्ये च योगभारकादा-कृष्य भैरवाचार्य्यप्रहितानि रत्नवन्ति बहलालोकविलुप्तान्त: पुराणि पञ्चराजतानि पुण्डरीकाणि नरपतिस्तु स्वयं ग्रह-प्रणयभङ्गकातरेण दाक्षिण्येणानुरुध्यमानो ग्रहणलाघवञ्च लङ्घ-यितुमसमर्थो दोलायमानेन मनसा स्थित्वा कथमपि सौज-न्यनिघ्नस्तानि जग्राह। सर्वफलप्रसवहेतुश्शिवभक्तिरियं मनोरथ दुर्लभानि फलन्ति फलानि। येनैवमस्मासु प्रीयते तत्र भगवान् भुवनगुरुर्भैरवाचार्य्यः। श्वो द्रष्टास्मि भगवन्तमित्युक्त्वा मस्करिणं व्यसर्जयत्। अनया च प्रतिपत्त्या परां मुदमवाप। अपरेद्युः प्रातरेवोत्थाय वाजिनमारुह्य समुच्छ्रितश्वेतातपत्रः समु-द्धूयमानधवलचामरः कतिपयैः राजपुत्रैः परिवृतो भैरवाचार्यं

सवितारमिव शशी द्रष्टुं प्रतस्थे गत्वा च किञ्चिदन्तरन्तदीय सेवार्थायान्तमन्यतमं शिष्यमद्राक्षीत् । अप्राक्षीच्च । भगवानास्ते इति । सोऽकथयत् । इदं जीर्णमातृगृहमुत्तरेण बिल्ववाटिकामध्यास्ते इति । गत्वा तं प्रदेशं अवततार तुरङ्गमात् । विवेश च बिल्ववाटिकाम् । अथ महतः कार्पटिकपेटकस्य मध्ये प्रातरेव स्नातं दत्ताष्टपुष्पिकमनुष्ठिताग्निकार्यं कृतभस्मरेखापरिष्कारपरिकरे हरितगोमयोपलिप्ते क्षितितलवितते व्याघ्रचर्मण्युपविष्टं कृष्णकम्बलप्रावरणव्याजेनासुरविवरप्रवेशाशया पातालान्धकारवासमिवाभ्यस्यन्तमुन्मीषता विद्युत्कपिलेनात्मतेजसा महामांसविक्रयक्रीतेन मनःशिलापङ्केनेव शिष्यलोकं लिम्पन्तं जटैकदेशप्रलम्बमानरुद्राक्षकुलिकेन रचितमहाशङ्खचन्द्रकेणोद्बन्धेन शिखापाशेन बध्नन्तमिव विद्यामदावलेपदुर्विदग्धान् ऊर्ध्वं सञ्चरतः सिद्धान् धवलकतिपयशिरोरुहेण शिरसा च पञ्चाशतं वर्षाण्यतिक्रान्तं खलित्युत्प्रेक्ष्यमाणं शङ्खलोमलेखं लोमशकर्णशष्कुलीप्रदेशं पृथुललाटं तिरश्चा भस्मललाटिकया बहुशः शिरोधृतगुग्गुलदहनसन्तापस्फुटितकपालास्थिपांशुरामाशङ्कामिव जनयन्तं सहजललाटतटवलीभङ्गसङ्कोचितकूर्चभागं बभ्रुभासा भूसङ्गत्या निरन्तरां यामिनीमेकिकामिव भ्रूलतां बिभ्राणमीषत्काचसमानकनीनिकेन रक्तापाङ्गनिर्गतांशुप्रतानेन मध्यधवलभासेन्द्रायुधेनेवातिदीर्घेण लोचनयुगलेन परितो महामण्डलमिवानेकवर्णरागं विलिखन्तं सितलोहितपीतपताकावलीप्रभवं शिवबलिमिव दिक्षु विक्षिपन्तं तार्क्ष्यतुण्डकोटिकुटिलाग्रघोणं दूरविनीर्णहनुसन्निकपोलं कि-

श्चिदन्तरस्य हृदयसन्निहितहरमौलिचन्द्रातपेनेव निर्गच्छता दन्तालोकेन धवलयन्तं दिग्चक्रवालं जिह्वाग्रस्थितसर्वशैवसंहितातिभारेणेव मनाक् प्रलम्बितोष्ठं प्रलम्बश्रवणपालिप्रेङ्खिताभ्यां स्फटिकमणिकुण्डलाभ्यां शुक्रबृहस्पतिभ्यामिव सुरासुरविजयविद्यासिद्धिश्रद्धयानुबध्यमानं बहुविधौषधिमन्त्रसूत्रपङ्क्तिना सलोहवलयेन प्रकोष्ठेन शङ्खखण्डं पुष्पदन्तमिव भगवता भवेन भग्नं भक्त्या भूषणीकृतं कलयन्तं अखिलरसकूपोद्घनघटीयन्त्रमालामिव रुद्राक्षमालां दक्षिणेन पाणिना भ्रमयन्तम् उरसि दोलायमानेन पिङ्गलतमाग्रेण कूर्चकलापेन संमार्जयन्तमिवान्तर्गतं निजरजोनिकरमतिनिबिडनीललोममण्डल निचितं ध्यानलब्धेन ज्योतिषा दग्धमिव हृदयदेशं दधान मीषत्प्रशिथिलवलिवलयबध्यमानतुन्दमुपचीयमानस्फिङ्मांसपिण्डकं पाण्डरपवित्रक्षौमं धृतकौपीनं सावष्टम्भपर्य्यङ्कबन्धमण्डलितेनाहतफेनश्वेतरुचा योगपट्टकेन वासुकिनेव प्रतिहतानेकमन्त्रप्रभयाभिभूतेन प्रदक्षिणीक्रियमाणमरुणतामरससुकुमारतलस्य पादयुगलस्य निर्मलैर्नखमयूखजालकैर्जर्जयन्तमिव महानिधानोद्धरणरभसेन रसातलं तोयक्षालनशुचिना धवलपादुकायुगलेन हंसमिथुनेनेव भागीरथीतीर्थयात्रापरिचयेना मुच्यमानचरणान्तिकं शिखरनिखातकुब्जकालायसकणकेन वैणवेन विशिखदण्डेन सर्वविद्याविघ्नापनयनाय विनायकाङ्कुशेनेव सततपार्श्ववर्तिना विराजमानं बहुभाषिणं मन्दहासिनं पूर्वोपकारिणं कुमारब्रह्मचारिणमतितपस्विनं कृशक्रोधं कृशानुरोधं महानगरमिवादीनप्रकृतिशोभितं मेरुमिव

कल्पतरुपल्लवराशिसुकुमारच्छायं कैलासमिव पशुपतिचरणारविन्दरजःपवित्रितशिरसं शिवलोकमिव माहेश्वरगणानुयातं जलनिधिमिवानेकनदीसहस्रक्षालितशरीरं जाह्नवीप्रवाहमिव बहुपुण्यतीर्थस्नानशुचिं धाम धर्मस्य तीर्थं तथ्यस्य कोशं कौशलस्य पत्तनं पूततायाः शालां शीलस्य प्रभवं प्रभावस्य क्षेत्रं क्षमायाः शरणं शालीनतायाः स्थानं स्थितेराधारं धृतेराकरं करुणायाः निकेतनं कौतुकस्यारामं रामणीयकस्य प्रासादं प्रसादस्यागारं गौरवस्य समाजं सौजन्यस्य सम्भवं सद्भावस्य कालं कलेर्भगवन्तं साक्षादिव विरूपाक्षं भैरवाचार्य्यं ददर्श।

भैरवाचार्य्यस्तु दूरादेव दृष्ट्वा राजानं चन्द्रमिव जलनिधिश्चचाल प्रथमतरोत्थितशिष्यलोकश्चोत्थाय प्रत्युज्जगाम समर्पितश्रीफलोपायनश्च जह्नुसमुद्गीर्यमाणगङ्गाप्रवाहह्रादगम्भीरया गिरा स्वस्तिशब्दमकरोत्। नरपतिरपि प्रीतिविस्तीर्यमाणधवलिम्ना चक्षुषा प्रदर्शयन्निव बहुतराणि पुण्डरीकवनानि ललाटपट्टपर्यस्तेनोदंशुना शिखामणिना महेश्वरप्रसादमिव तृतीयनयनोद्गमेन प्रकाशयन्नावर्जितकर्णपल्लवपलायमानमधुकरः शिवसेवासमुन्मूलिताशेषपापपल्लवमुच्यमान इव दूरादवनतः प्रणाममभिजातश्चकार।

आचार्य्योऽप्यागच्छतात्रोपविशतेति शार्दूलचर्मात्मीयमदर्शयत्। उपदर्शितप्रश्रयस्तु राजा मत्तकलहंसगद्गदस्वरसुभगां मधुरां मधुरसमयीं महानदीमिव प्रवर्तयन् वाचं व्याजहार।

भगवन्नार्हसि मामन्यनृपस्खलितैः खलीकर्तुम्। अशेषराजकोपेक्षितायाः चञ्चललक्ष्म्याः खल्वयं शिलापराधो दुर्विपाकदौरात्म्यं वा यदेवमाचरति मयि गुरुः। अभूमिः खल्वयमुपचाराणाम्। अलमतियन्त्रणया दूरस्थितोऽपि मनोरथशिष्योऽयं जनो भगवतः माननीयञ्च गुरुवचनं नोल्लङ्घनमर्हति गुरोरासनम्। आस्तामत्र नवसन एवात्र इति व्याहृत्य परिजनोपनीते वासमि निषसाद। भैरवाचार्योऽपि प्रीत्या नातिक्रमणीयं नृपवचनमनुवर्तमानः पूर्वक्तदेवव्याघ्राजिनमभजत आसीने सराजपरिजने शिष्यलोको समुचितमर्यादिकां चक्रे। क्रमेण नृपमाधुर्यहृतान्तःकरणः शशिकरनिकरविमलदशनदीधितिः सरस्वतीः साक्षात् शिवभक्तीरिव दर्शयन्नुवाच। तात! तव स्वैव यदनेके कथयन्ति गुणानां गौरवम्। सकलसौजन्यस्थानमसि। विभवानुरूपास्तुतिप्रतिपत्तयः। जन्मनः प्रभृति अदृष्टदृष्टिरस्मि स्वापतेयेषु। यतः सकलदोषकलङ्कानलेन्धनैर्धनैरविक्रीतं क्वचिच्छरीरमस्ति। भैक्षमर्जिताः सन्ति प्राणाः कुण्ठीभूतानि कतिचिद्विद्यन्ते विद्याक्षराणि। भगवच्छिवभट्टारकपादसेवातः समुपार्जिता कियत्यपि सन्निहिता पुण्यकणिका स्वीक्रियतां यद्युपयोगार्हम्। अतनुगुणतरुवाटस्थानि कुसुमानीव भवन्ति मनांसि सताम्।

अपि च। विद्वन्! समन्तात् श्रूयमाणाः शब्दा इव सुखयन्ति साधवः। सुधीरेऽपि मनसि यशांसि कुर्वन्ति विवरं विशतः कुतूहलस्य फेनधवलैः स्रोतोभिरिव नीयमानो गुणौघानीतोऽस्मि कल्याणिन इति। राजा तु तं प्रत्यवादीत्। भगवन्ननुक्तोऽपि शरीरादौ साधूनां स्वामिन एव प्रणयिनः

युष्मद्दर्शनादुपार्जितमपरिमितं पुण्यजातं कृतमनेनागमनेनैव स्पृहणीयपदमारोपितोऽस्मि गुरुणेति विविधाभिश्च कथाभिश्चिरं स्थित्वा गृहमगात्। अन्यस्मिन्दिवसे भैरवाचार्य्योऽपि राजानं द्रष्टुमुपाययौ। तस्मै स राजा सान्तःपुरं सकोशं सपरिजनमात्मानन्निवेदितवान्।

स विहस्योवाच। तात! क्व विभवाः क्व वयं वनवर्त्तिताः। धनोष्मा मामुत्थापयति लतेव तपस्विता खद्योतानामिवास्माकमियमेवापरोपतापिनी राजतेजस्विता। भवादृशा एव भाजनं विभूतेरिति स्थित्वा कञ्चित्कालं जगाम। परिव्राट्तु तेनैव क्रमेण पञ्च राजतानि पुण्डरीकाण्युपायनीचकार एकदा तु श्वेतकर्पटप्रावृतं किमप्यादाय प्राविशत्। प्रविश्य च पूर्ववत् स्थित्वा मुहूर्त्तमब्रवीत्। महाभाग! भवन्त माह भवान् यथा अस्मच्छिष्यः पातालस्वामिनां ब्राह्मणायनस्तेन ब्रह्मराक्षसहस्तादपहृतो महासिरट्टहासनामा सोऽयं भवद्भुजयोग्यो गृह्यतामित्यभिधायापनीय कर्पटाच्छादनात् परिवारादुपरि चकर्ष शरन्नगनमिव पिण्डतान्नीतं कालिन्दीप्रवाहमिव स्तम्भितजलं जिगीषया कृष्णकोपितं कालियमिव कृपाणताङ्कृतं लोकविनाशनाय प्रकटितधारासारं प्रलयकालमेघनिर्मितं कृतान्तकोपानलतप्तेनेवायसा घटितमतितीक्ष्णतया पवनस्पर्शेनापि रुषेव क्वणन्तं मणिसभाकुट्टिमपतत्प्रतिबिम्बच्छलेनात्मानमपि द्विधेव पाटयन्तमरिशिरश्छेदलग्नैः कचैरिव किरणैः करालितधारं मुहुर्मुहुस्तडिदुन्मेषतरलैः प्रभाचक्रस्फुरितैर्जर्जरितातपं खण्डशश्छिन्दन्तमिव दिवसं कटाक्षमिव कालरात्रेः कर्णोत्पलमिव कालस्यागारमिव

कोपस्यालङ्कारमिवाहङ्कारस्य कुलमिव शौर्यस्य दोहदमद्-
र्पस्य सहायं साहसस्यामात्यं मृत्योरागमनमार्गमलक्ष्म्याः निर्ग-
मनमार्गं कीर्तेः कृपाणं अनतिस्तुतं गृहीत्वा करेणायुधं प्रीत्या
प्रतिमानिभेनालिङ्गन्निव सुचिरं ददर्श ।

सन्दिदेश च वक्तव्यो भगवान् परद्रव्यग्रहणावशादुर्विदग्ध-
मपि मे मनो युष्मद्विषये न शक्नोति वचनव्यतिक्रमव्यभिचार-
माचरितुमिति । परिव्राट् तु गृहीते तस्मिन् परितुष्टः स्वस्ति
भवते साधयामीत्युक्त्वा निरयासीत् । नृपतिस्तु प्रकृत्या
वीररसानुरागिणि कृपाणेन करतलगतां मेदिनीममन्यत
अथ व्रजत्सु दिवसेषु एकदा तु भैरवाचार्यो राजानमु-
पहासोपग्रहमवादीत् । तात ! स्वार्थालसाः परोपकारदक्षाश्च
प्रकृतयो भवन्ति भव्यानां भवादृशामर्थिदर्शनं महोत्सवः प्रण-
यनमाराधनम् अर्थग्रहणमुपकारः भूमिरसि सकल-
लोकमनोरथानां येनाभिधीयसे श्रूयताम् । भगवतो महा-
कालहृदयनाम्नो मन्त्रस्य कृष्णाहगम्बरानुलेपनाकल्पेन कल्प-
कथितेन महाभैरवाहूतेन महाश्मशाने जपकोट्या कृतसेवोऽस्मि
तातस्य च वेतालसाधनावसाना कार्यसिद्धिः । असहायैश्च सा-
दुरवापा त्वञ्चालमस्मिन् कर्मणि । त्वयि गृहीतभारे भवि-
ष्यन्त्यपरे सहायास्त्रयः । एकएवास्माकं बालमित्रं टिट्टिभ-
नामा मस्करी यो भगवन्तमुपतिष्ठते द्वितीयः पातालस्वामी ।
अपरोऽपि मच्छिष्यएव कर्णतालनामा द्रविडः । यदि च
साधु मन्यसे ततोऽनीयत दिङ्नागहस्तदीर्घो गृहीताट्टहासो
निशामेकां दिङ्मुखागतां बाङ्करिति कृतवर्चसि तस्मिन्नन्धकार-
प्रविष्टइव दृष्टदीपप्रकाशः प्राप्तोपकारावकाशः प्रमुदितेना-

त्मना नरेन्द्रः समभाषत भगवन्ननुगृहीतोऽस्मि । अनेन शिष्यजनसामान्येन निर्देशेन कृतपरिग्रहमात्मानमवैमीति । ननन्द च तेन नरेन्द्रव्याहृतेन भैरवाचार्यश्चकार च सङ्केतम् । अस्यामेवागामिन्यामसितपक्षचतुर्दशीक्षपायामस्यामेव वेलायाममुष्मिन् महाश्मशानसमीपभाजि शून्यायतने मत्समीपद्वितीयेनायुष्मता द्रष्टव्योऽयमिति ।

अथातिक्रान्तेषु तेष्वहःसु प्राप्तायान्तस्यां कृष्णपक्षचतुर्दश्यां शैवेन विधिना दीक्षितः क्षितपालो नियमवानभूत् । कृताधिवासश्च सम्पादितगन्धधूपदीपमाल्यादिपूजं खड्गमट्टहासमसिं सहायमकरोत् । ततः परिणते दिवसे केनायसा कर्मसाधनाय कृतरुधिरबलिविधानास्विव लोहितायमानासु दिक्षु रुधिरबलिलम्पटासु वेतालजिह्वास्विव लम्बमानासु रविदीधितिषु नरेन्द्रानुरागेणेव गृहीतापरदिशि स्वयमेव दिक्पालिताच्चिकीर्षति सवितरि यातुधानीष्विव वर्धमानासु तरुच्छायासु पातालतलवासिषु विज्ञाय दानवेष्विवोत्तिष्ठत्सु तमोमण्डलेषु नभसि पुञ्जीभवति रौद्रं कर्म दिदृक्षमाण इव नक्षत्रगणे विगाढायां शर्वर्यां सुप्तजनस्तिमिते निशीथे राजा सान्तःपुरं परिजनं च वाचयित्वा वामकरस्फुरत्फलको दक्षिणकरेणोत्खातं खड्गमट्टहासमादाय विसर्पता खड्गप्रभापटलेन नीलांशुकपटेनेव दर्शनभयाकुण्ठितनिखिलगात्रयष्टिरनादिष्टयाप्यनुगम्यमानो राजलक्ष्म्या पृष्ठतः परिमललग्नमधुकरवेणिकाव्याजेन केशेष्विव कार्यसिद्धिमाकर्षन्नेकाकी नगरान्निरगात् अगमत् देशम् ।

अथ प्रत्युज्जग्मुस्ते त्रयोऽपि द्रौणिकृपकृतवर्माण इव सौप्तिके सन्नद्धाः स्नाताः स्रग्विणो गृहीतविकटवेषाः कुसुमशेखरसञ्चारिभिः क्रियमाणमन्त्रशिखाबन्धा इव भृ-ङ्गैः घट्टचरणोष्णीषपट्टकान् ललाटमध्यघटितविकटस्वस्ति-कग्रन्थीन् महामुद्राबन्धानिव धारयन्तो मूर्द्धभिरेकश्रवणवितत-विमलदन्तपत्रप्रभालेपधवलकपोलैर्मुखैरापिबन्त इव निशा-चरापचयचिकीर्षया शार्वरमन्धकारमितरकर्णावलम्बिनां रत्नकुण्डलानामच्छाच्छया रुचा रोचन्त एव मन्त्रपरिजप्तया समालब्धान् स्वप्रतिबिम्बगर्भान् कर्मसिद्धये दत्तपुरुषोपहारा-निव कलयन्तो निशितनिस्त्रिंशरश्मिमुक्तामसीमन्तितति-मिरामात्मीयदिशि भागसंरक्षणाय त्रिधेव त्रियामां पाटयन्तः सार्द्धचन्द्रैः कलधौतबुद्बुदावलीतरलतारागणैर्दिवइव पुरुषा-सिधारानिसृतैः स्वपृष्ठैर्गृहीतैश्चर्मफलकैरकाण्ड एव शार्वरी-मपरामर्पयन्तः काञ्चनशृङ्खलाकलापनियमितनिबिडपिण्डितप्रप-णाधोवस्त्रासिधेनवः टिट्टिभकर्णतालपातालस्वामिनः निवे-दितवन्तश्चात्मानम् ।

अवनिपतिस्तु कोऽत्र क इति तानपृच्छत् । आच-चक्षिरे च स्वं स्वं नाम त्रयोऽपि ते । तैरेवानुगम्यमानो जगाम तां बलिप्रदीपालोकजर्जरितगुग्गुलधूपस्तम्भमानदि-ग्विभागतया विक्षिप्यमाणरक्षासर्षपार्द्धदग्धान्धकारपलाय-माननिशामिव समुपकल्पितसर्वोपकरणां स्वच्छाश्च गम्भी-राश्च साधनभूमिम् । तस्याश्च कुमुदधूलिधवलेन भस्मना लिखितमरकतमण्डलस्य मध्ये स्थितन्दीप्ततरस्तेजःप्रसरं पृथु-परिवेषपरिक्षिप्तमिव शरत्सवितारं मथ्यमानक्षीरोदावर्त-

मध्यवर्तिनमिव मन्दरं रक्तचन्दनानुलेपिनो रक्ताम्बराभरणस्योत्तानशायिनः शवस्योपरि उरस्युपविश्य जाततजातवेदसि मुखकुहरे प्रारब्धाग्निकार्यमकृष्णोष्णीषं कृष्णाङ्गरागं कृष्णप्रतिसरं कृष्णप्रवाससङ्कृष्णतिलाहुतिनिभेन विद्याधरत्वतृष्णया मानुषनिर्माणकारणकालुष्यपरमाणूनिव क्षयमुपनयन्तमाहुतिदामपर्यस्ताभिः प्रेतमुखस्पर्शदूषितं प्रक्षालयन्तमिवाशुशुक्षणिं करनखदीधितिभिर्धूमलोहितेन चक्षुषा क्षतजाहुतिमिव हुतभुजि पातयन्तमीषद्विवृताधरपुटप्रकटितसितदशनशिखरेण दृश्यमानमूर्तमन्त्राक्षरपङ्क्तिनेव मुखेन किमपि जपन्तं क्षोभश्रमस्वेदजनुमतिबिम्बिताभिरसिदीपिकाभिर्दिक्पालैरिव सिद्धये सर्वाभिरवयवानामंसावलम्बिना बद्धगुणेन विद्याधरराज्येनेव ब्रह्मसूत्रेण परिगृहीतं महाभैरवं भैरवाचार्यमपश्यत्।

उपसृत्य चाकरोन्नमस्कारं अभिनन्दितश्च तेन स्वव्यापारमन्वतिष्ठत्। अत्रान्तरे पातालस्वामी शातमन्यवीमाशामङ्गीचकार कर्णतालः कौबेरीं परिव्राट् प्राचेतसीम् राजा तु ज्योतिषा त्रैशङ्कवेनाङ्कितां ककुभमलञ्चकार। एवमुपस्थितेषु प्रतिदिशं दिक्पालेषु दिक्पालभुजपञ्जरप्रविष्टे विश्वस्मिन् साधयति भैरवं कर्म भैरवाचार्ये चिरकृतकोलाहलेषु निभृतप्रयतेषु मधुपानेषु प्रत्यूहकारिषु कुणपेषु गलत्यर्द्धरात्रसमये मण्डलस्य नातिदवीयस्युत्तरेणाकस्मादेव प्रलयमहावराहदंष्ट्रानिचयमिव दर्शयन्ती मही पपाट। सहसैव च तस्माद्विवराद्विस्फारणोत्थित इवालानकाललोहस्तम्भो महावराहइव विवरस्कन्धपीठो नरकासुरइव भुवो गर्भादुद्भूतो

बलिदानव इव भित्त्वोत्थितः पातालमिन्द्रनील प्रासाद इवो-
परिज्वलितरत्नप्रदीपस्निग्धनीलघननिबिडकुटिलकुन्तलकान्त-
मौलिरुन्मीलन्मालतीमुण्डमालो गद्गदतया स्वरस्य स्वभावलो-
हिततया चक्षुषः क्षीब इव यौवनमदेन वल्गनचलद्गलद्दामकः
करसंपुटवलिततया महा दिङ्नागकुम्भविकटांसकूटौ पुनः
पुनः पल्लवयन् सान्द्रचन्दनकर्दमदत्तैर्व्यवस्थास्थासकैः सितजल-
धरखण्डशारित इव शरदाकाशैकदेशैः केतकीगर्भपाण्डुरस्य
चण्डातकस्योपरि श्यामपरिकृतकुक्षिः कक्ष्याबद्धं विधाय विला-
सविक्षिप्तेन धवलव्यायतपालिना पटान्तेन धरणीतलगतेन
धार्यमाण इव पृष्ठतः शेषेण स्थिरस्थूलोरुदण्डो भूभङ्गचलनभ-
येनैव मन्थराणि स्थापयन् पदानि निर्भरगर्वगुरुं कथमपि
शैलमिव गात्रमुद्वहन् दर्पेण स्वेन मुहुर्मुहुरुरसि द्विगुणीकृते
दोर्ष्णि वामे तिर्यगुत्क्षिप्ते दक्षिणे जङ्घाकाण्डे कुण्डलीकृते
च चण्डास्फोटनटङ्कारैः कर्मविघ्ननिर्घातानिव घातयन्नेकेन्द्रि-
यविकलमिव जीवलोकं कुर्वन् कुवलयदलश्यामलः पुरुष-
मुज्जगाम।

जगाद च विहस्य नरसिंहनादनिर्घोषघोरया गिरा भो!
विद्याधरश्रद्धाकामुक! किमयं विद्यामदावलेपः सहायम-
दो वा। यदस्मिन् जनेऽविज्ञाय बलिं बालिश इव सिद्धिमभिल-
षसि का ते बुद्धिरियम् एतावता कालेन देवाधिपतिरस्य
मन्त्रस्यैव लब्धव्यपदेशस्य नागतस्ते श्रोत्रोपकण्ठं श्रीकण्ठो
नाम नागोऽहम्। अनिच्छति च मयि का शक्तिर्ग्रहगण-
स्यापि गगने गन्तुं भूतनाथस्तपस्वी यस्त्वादृशैः सेवाप-
सदैरुपकरणीक्रियते। लभस्वेदानीं महात्मना नरेन्द्रेण

दुर्नरेन्द्र! स्वस्य तावद्दुर्नयस्य फलमित्यभिधाय निष्ठुरैः प्रकोष्ठप्रहारैस्त्रीनपि टिट्टिभप्रभृतीनभिमुखमभिधावन् सकरावरणकृपाणान पातयत्।

अथापूर्वाधिक्षेपश्रवणाद्दरिशस्त्रवणैरप्यमर्षस्वेदच्छलेनानेकसमारोपितमसिधाराजलमिव वहद्भिरवयवैरपि रोमाञ्चनिभेन मुक्तशरशतशल्यनिकरभरलघुमिवात्मानं रणाय कुर्वद्भिरट्टहासेनापि प्रतिबिम्बिततारागणेन स्पष्टदृष्टधवलदन्तमण्डलेनावज्ञया हसतेव कथ्यमानसत्त्वावष्टम्भः परिकरबन्धविभ्रमभ्रामितकरनखकिरणचक्रवालच्छलेन व्यपगमाशङ्कया नागमर्दनमन्त्रमण्डलबन्धेनेव रुद्धं दशदिशोनरनाथं सावज्ञमवादीत्। आः काकोदरकाक! मयि स्थिते राजहंसेन जिह्रेषि बलिं याचितुम्। अमीभिः किं वा पुरुषभावितैर्भुजे वीर्यं निवसति सतान्न वाचि। प्रतिपद्यस्व शस्त्रम्।

अयं न भवति अगृहीतशस्त्रं त्वयि चितो मे भजः प्रहर्तुमिति नागस्तनाद्दततरमिति किं शस्त्रेण भुजाभ्यामिव भिनद्मि भवतोदर्पम् इत्यभिधाय स्फोटयामास। नरपतिरपि निरायुधामायुधेन युधि लज्जमानोजेतु मुत्सृज्य सचर्मफलकमट्टहासमसिमध्योरुकस्योपरि बबन्ध वाहुयुद्धाय कक्ष्याम् एवं युयुधाते च दर्पनिर्दयास्फोटस्फुटितभुजरुधिरशीकरसिच्यमानौ शिलास्तम्भैरिव पतद्भिर्वाहुदण्डैः शब्दमयमिव कुर्वाणौ भुवनन्तौ। अचिराच्च पातयामास भूतले भुजङ्गमं भूपतिः। जंग्राहच कचेषु उच्चखानच शिरःच्छेत्तु मट्टहासमसिम् अपश्यच्च वैकक्ष्यमालामन्तरेणास्य यज्ञोपवीतम्। उपसंहृतशस्त्रव्यापारश्चाब्रवीत्। दुर्विनीतोऽसि ते दुर्नयनिर्वाहवीजमिदम्।

यतो विश्रब्धमेवाचरसि चापलानि । अनन्तरञ्च सहसैवातिबहलां ज्योत्स्नां ददर्श । शरदि विकसतां कमलवनानामिव प्रभासमाच्छादिनं गन्धमजिघ्रत् । झटिति च परशब्दमशृणोत् व्यापारयामास शब्दानुसारेण दृष्टिं । अथ करतलस्थितस्यैव वाट्टहासस्य मध्ये तडितमिव जलधरोदरे स्फुरन्तीं प्रभया पिबन्तीमिव त्रियामान्तामरसहस्रां कोमलाङ्गुलिरागराजिजालकानि चरणलग्नानि वेलाबालविद्रुमलतावनानीवाकर्षयन्तीं करपङ्कजसङ्कोचाशङ्कया शशाङ्कमण्डलमिव खण्डशः कृतं निर्मलचरणनखनिवहनिभेन बिभ्रतीं गुल्फावलम्बि नूपुरपुटतया स्थितिनिबिडनिगडकटकावलिबन्धनामिव परिभ्रमणागतां बहुविधकुसुमशकुनिशतशोभितात् पवनचलिततनुतरङ्गादतिस्वच्छादंशुकादुदधिसलिलादिवोत्तरन्तीम् उदधिजलजन्मप्रेम्णा त्रिवलिच्छलेन त्रिपथगयेव परिष्वक्तमध्यामभ्युन्नतस्तनमण्डलां दृश्यमानदिव्यनागकुम्भामिव ककुभं स्तनशिखरलग्नमैरावतकरशीकरमिव शरत्तारागणतारं हारमुरसा दधानां धवलचामरैरिव मन्दमन्दनिश्वासदोलायितैर्हारकिरणैरुपवीज्यमानां स्वभावलोहितेन मदान्धगन्धसिन्धुरकुम्भस्फोटसंक्रान्तसिन्दूरेणेव करद्वयेन द्योतमानां हरशिरःखण्डेन्दुद्वितीयखण्डेनेव कुण्डलीकृतेन ज्योत्स्नामुचा दन्तपत्रेण दर्शनीयां कौस्तुभगभस्तिस्तबकेनेव श्रवणलग्नेनाशोककिसलयेनालङ्कृतां महता मातङ्गमदमयेन तिलकेनादृश्यमानच्छत्रच्छायामण्डलेनेवाविरचितललाटामापदतलाच्चन्द्रातपधवलेन चन्दनेनाद्रिराजयशसेव धवलीकृतां धरणीतलचुम्बिनीभिः कर्णकुसुममालाभिः सरिद्भिरिव सागराधिष्ठिताभिरधिष्ठितां

मृणालकोमलैरवयवैः कमलसम्भवत्वमनन्तरमाचक्षाणां स्त्रियमपश्यत्।

असम्भ्रान्तश्च पप्रच्छ ताम् भद्रे! कासि किमर्थं वा दर्शपथमागतासीति। सा तु स्त्रीजनविरुद्धेन धैर्यावष्टम्भेनाभिभवन्तीव राजानमभाषत। वीर! विद्धि मां नारायणोरःस्थललीलाविहारहरिणीं पृथुभरगम्भीरादिराजवंशयशःपताकां सुभटभुजस्तम्भविलासशालभञ्जिकां रणरुधिरतरङ्गिणीतरङ्गक्रीडादोहलदुर्ललितराजहंसीं सितनृपच्छत्रखण्डशिखण्डिनीं निशितशस्त्रधारावनविभ्रमणविभ्रमसिंहीमसिधाराजलकमलिनीं श्रियम्। आगतास्मि तवामुना शौर्यरसेन याचस्वेदानीं ददामि ते वरमभिलषितमिति धीराणां त्वं पुनरुक्तः परोपकारः! प्रणम्य तां स्वार्थमभिमुखो भैरवाचार्यः सिद्धिं ययाचे। लक्ष्मीस्तु प्रीततरहृदया विकास्यमानेन चक्षुषा क्षीरोदकेनेव पर्यस्तेनाभिषिञ्चन्तीव भूपालमेवमस्त्वित्यब्रवीत्। अब्रवीच्च अनेन सत्त्वोत्कर्षेण भगवच्छिवभट्टारकभक्त्या चासाधारणया भवान् सूर्याचन्द्रमसोस्तृतीय इवाविच्छिन्नस्य प्रतिदिनमुपचीयमानवृद्धेः शुचिसुभगसत्यत्यागशौण्डगुणप्रकाण्डप्रायस्य महतो राजवंशस्य कर्त्ता भविष्यति। यस्मिन्नुत्पत्स्यते सप्तद्वीपान्तराणां भोक्ता हरिश्चन्द्र इव हर्षनामा चक्रवर्त्ती त्रिभुवनविजिगीषुर्मान्धातुर्द्वितीयः। यस्यैवं श्रीः करकमलमपहाय स्वयमेव ग्रहीष्यति चामरमिति वचसोऽन्ते तिरोबभूव। भूपालस्तु तदाकर्ण्य सहसैवातिमात्रमप्रीयत। भैरवाचार्य्योऽपि तस्या देव्यास्तेन वचसा कर्मणा च सम्यगुपपादितेन कृत एव कुन्तली

कवची किरीटी कुण्डली हारी केयूरी मेखली खड्गी च भूत्वा-विद्याधरत्वमाप प्रोवाच राजानम् ।

अदूरव्यापिनः खलु चेतसामलसानां मनोरथाः सतान्तु विस्तारवन्तः स्वभावेनैवोपकृतामिव स्वप्नेऽप्यसम्भाविताभिमां दातुं दशां समर्थोऽभवत्त मप्रज्ञाय सम्पत्कणिकामपि प्राप्य कुनटेव लघुप्रकृतिश्चपलतामुपयामि यानि तदीयैर्गुणैरुप-करणीकृतस्य त्वत्त एव लब्धात्मलाभस्य निर्लज्जनियमस्य मूढहृदयस्य यदिच्छामि येन केनचित् कार्यलवोपपादनोप-योगेन ख्यापयितुमात्मानमिति प्रत्युपकारदुष्प्रवेशास्तु धीराणां हृदयावष्टम्भाः । यतस्तु राजा भवत्सिद्धौ एव परिसमाप्तकृत्यो ऽस्मि साधयतु मान्यो यथा समीहितं स्थानमिति प्रत्याचचक्षे ।

राजा तथोक्तश्च भूभुजं जिगमिषुः सुचिरमालिङ्ग्य टिट्टिभा-दीन् कुवलयवनेनिवावश्यायशीकरस्राविणा साश्रुणा चक्षुषा वीक्षमाणः क्षितिपतिं पुनरुवाच । तात ! किं ब्रवीमि या-सीति न स्नेहसदृशं त्वदीया आज्ञा इति पुनरुक्तम् गृह्यतां शरीरमिति व्यतिरेककरणम् तिलशः क्रीतावयवमिति नोपकारानुरूपम् बान्धवोऽसीति दूरीकरणम् त्वयि स्थितं हृदयमित्यप्रत्यक्षम् त्वद्विरहकारिणीयम् सिद्धिरित्यश्रद्धेयं निष्कारणा सर्वोपकारा इति अनुवादाः स्मर्तव्या वयमित्याज्ञा सर्वदा कृतघ्नालापेषु सज्जनकथासु च चेतसि कर्तव्योऽयं स्वार्थपरोजन इति । समुत्पपात च वेगच्छिन्नहारोच्छलित-मुक्ताफलनिकरतारागणं गगनतलम् सीमन्तितगङ्गाग्रामः सिद्धोचितं धाम ययौ ।

श्रीकण्ठोऽपि स्वामिन्! पराक्रमक्रीतः कर्तव्येषु नियोगेनानुग्राह्यो ग्राहितविनयोऽयं परिजन इत्यभिधाय राजानुमतो यत उदितः स देवभूयो भुवो विवरं विवेश। नरपतिस्तु क्षीणभूयिष्ठायां रजन्यां प्रवातुमारब्धे प्रबुद्ध्यमानकमलिनीनिश्वाससुरभौ वनदेवताकुचांशुकहरणपरिहासात् स्वेदिनीव सावश्यायशीकरे परिमलावकृष्टमधुकरे कुमुदिनीनिद्रावाहिनि निशापरिणतिजडे तुषारक्लेशिनि वनानिले विरहविधुरचक्रवाकचक्रनिश्वसितसन्तापितायामिवापरजलनिधिमवतरन्त्यां त्रियामायां साक्षादागतलक्ष्मीविलोकनकुतूहलिनीष्विव समुन्मीषन्तीषु नलिनीषून्निद्रपक्षिणि क्षरति सकुसुमरसमिव तुहिनकणनिकरमृदुपवनलासितलते कानने कमललक्ष्मीप्रबोधमङ्गलशङ्खेष्विव रसत्स्वन्तः प्रबुद्धध्वनिद्विरेफेषु मुकुलायमानेषु कुमुदवनेषु उज्जिहानरविरथवाजिविसृष्टैः प्रोथपवनैः प्रोत्सार्यमाणास्विव वारुण्यां ककुभि पुञ्जीभवन्तीषु श्यामलताकलितासु तारकासु मन्दरशिखराश्रयिणि मन्दानिलविलुलितकल्पलतावनकुसुमधूलिविच्छुरित इव धूसरीभवति सप्तर्षिमण्डले सुरवारणाङ्कुश इव च्युते गलति तारामये मृगे लीनपि टिट्टिभादीन् गृहीत्वा नागपञ्जनव्यतिकरमलीमसे ऽतिशुचिनि वनपयसि प्रक्षाल्याङ्गानि नगरं विवेश।

अन्यस्मिन्नहनि तेषामात्मानमन्तः स्नानभोजनाच्छादनादिना प्रीततरं कृत्वा कतिपयदिवसापगमे च स परिव्राट् भूभुजा वार्यमाणोऽपि वनं ययौ पातालस्वामिकर्णतालौ तु शौर्यानु-

रक्तौ तमेव स्वामिनं सिषेवाते। सम्पादितमनोरथातिरिक्त-विभवौ च सुभटमण्डलमध्ये निकृष्टमण्डलाग्रौ समरमुखेषु प्रथमोपयुज्यमानौ कथान्तरेषु चान्तरान्तरा समादिष्टौ राज्ञा विचित्राणि भैरवाचार्यचरितानि शैववृत्तान्तानि च कथयन्तौ तेनैव सार्द्धं जरां जग्मतुरिति।

इति श्रीहर्षचरिते राजवंशावतार तृतीयोच्छ्वासः॥ ३॥



## चतुर्थोच्छ्वासः।

योगं स्वप्नेऽपि नेच्छन्ति कुर्वते न करग्रहम्।
महान्तो नाममात्रेण भवन्ति स्थितयोभुवः॥
सकलमहीभृत्कम्पकृदुत्पत्स्यत एकएव नृपवंशे।
विपुलेऽपि पृथुप्रतिमो दन्तइव गणाधिपस्य मुखे॥

अथ तस्मात् पुष्पभूते द्विजव स्वेच्छया महीनिकोशनाभिपद्म इव पुण्डरीके चणाल्लक्ष्मीपुरःसरो रत्नसञ्चयइव रत्नाकरात् गुरुबुधकविकलापतेजस्वि भूनन्दनप्रियोग्रहगणइवोदयस्थानात् महाभारवहनयोग्यः सागरइव सगरप्रभावाद्दुर्जयबलसनाथो हरिवंशइव शूराग्निजेगामराजवंशः। यस्मादविनष्टधर्मधवलाः प्रजाः सर्गाइव कृतमुखात् प्रतापाक्रान्तभुवनाः किरणाइव तेजोनिधेर्विग्रहव्याप्तदिङ्मुखाः गिरयइव भूभृत्प्रभावात् धरणी धारणक्षमाः दिग्गजाइव ब्रह्मकरादुत्थितात् पातु मुद्यताइव

जलधराइव घनागमादिच्छाफलप्रदायिनः कल्पतरवइव नन्दनात्सम्भूतास्तथाच रूपविकाराइव श्रीधरादजायन्त राजानः। तेषु चैव मुत्पद्यमानेषु क्रमेणोदपादि ऊणाहरिणको राजाधिराजः। यो राज्याङ्गसङ्गिन्यभिषिच्यमानएव मलानीव धनानि मुमोच यः परकीयेनापि कातरवल्लभेन रणमुखे तृणेनेव धृतधौतासिप्रतिविम्बितेनात्मान मप्यदूयत समितिषु सहायेन। यो रिपूणां पुरः पृथुनिषुधनुषापि नमता अतिमानसेनाखिव्यवच्छला मध्यन्तर्गतां परिमितरिपुशरशतशङ्कुकीलितामिव निश्चलता मुवाह राजलक्ष्मीम्।

यस्य सर्वासु दिक्षु सम्मीकृतसरित्तटवटविटपाटवीतरुणतृणगुल्मवल्मीकगिरिगहनैर्दण्डयात्रापथैः पृथुभिर्भृत्योपभोगाय व्यभजतेव बहुधा वसुधाम्। यस्यालब्ध युद्धदोहलमात्मीयोऽपि सकलरिपुलमूहसमुत्सारकः परकीयइव ततापप्रतापः। यस्य च वह्निमयो हृदयेषु जनमयो लोचनपटेषु मारुतमयः श्वसितेषु क्षमामयो योगेष्वाकाशमयः शून्यतासु पञ्चमहाभूतमयो मूर्तइवादृश्यत निहतप्रतिसामन्तान्तःपुरेषु प्रतापः। यस्य चाप्तेषु भृत्यवर्गेषु प्रतिविम्बितेव तुल्यरूपा समलक्ष्यत लक्ष्मीः। तथाच। यस्य प्रतापाग्निना भूतिः शौर्योष्मणा सिद्धिरसिधाराजलेन वंशवृद्धिः शस्त्रव्रणमुखैः पुरुषकारोक्ति र्धनुर्गुणकिणेन करग्रहीतिरभवत्। यो वैर मुपायनं विग्रहमनुग्रहं समरागमनं महोत्सवं शत्रुलाभं निधिदर्शनं अरिबाहुल्यमभ्युदयमाहवाह्वानं वरप्रदान मवस्कन्दपातं दृष्टिवृद्धिं शस्त्रप्रहारपतनं वारिधारामसमन्यत। यस्मिंश्च राजनि निरन्तरै र्यूपनिकरैरङ्कुरितमिव कृतयुगेन दिङ्मुख-

विसर्पिभिरग्निहोत्रधूमैः पलायितकलिना ससुरैः सुराज्ञयै रवतीर्णमिव स्वर्गेण सुरालयशिखरोद्धूयमानै धवजध्वजैः पल्लवितमिव धर्मेण बहिरुपचरितविवटसभासत्त्रप्रावंशमण्डलैः प्रसूतमिव ग्रामैः काञ्चनमयसर्वोपकरणै र्विभवै र्विकीर्णमिव मेरुणा द्विजदीयमानैरर्थकलशैः फलितमिव प्रजाभाग्यसम्पदा तस्य जन्मान्तरेऽपि सती पार्वतीव शङ्करस्य गृहीतहृदया लक्ष्मीरिव लोकगुरोः स्फुरत्तरलतारकरोहिणीव कलावतः सर्वजननी बुद्धिरिव प्रजापतेर्महाभूभृत्कुलोद्भूता गङ्गेव वाहिनी नायकस्य मानसानुवर्तनं चतुरा हंसीव राजवंशस्य सकललोकार्चितचरणाचद्रव धर्मस्य दिवानिशं मुक्तपार्श्वस्थितस्यारुन्धतीव महामुने हंसीव गतिषु परपुष्टमयीवालापेषु चक्रवाकमयीव पतिप्रेमणि प्रावृण्मयीव पयोधरोन्नतौ मदिरामयीव विलासेषु निधिमयीवार्थसञ्चयेषु वसुधारामयीव प्रसादेषु कमलमयीव कोशसंग्रहेषु कुसुममयीव फलदानेषु सन्ध्यामयीव वन्द्यत्वे चन्द्रमयीव निरुष्मत्वे दर्पणमयीव प्रतिप्राणग्रहणेषु सामुद्रमयीव परचित्तज्ञानेषु परमात्ममयीव व्याप्तिषु स्मृतिमयीव पुण्यवृत्तिषु मधुरमयीव सम्भाषणेष्वमृतमयीव तृष्यत्सु वृष्टिमयीव भूतेषु निवृत्तिमयीव सखिषु वेतसमयीव गुरुषु गोत्रवृद्धिरिव विलासानां प्रायश्चित्तशुद्धिरिव स्त्रीत्वस्याज्ञासिद्धिरिव मकरध्वजस्यव्युत्थानबुद्धिरिव रवेर्मनोरथसम्पदिव रामणीयकस्य द्रव्यसम्पत्तिरिवानुरागस्य वरप्राप्तिरिव कान्तेः सर्गसमाप्तिरिव सौन्दर्यस्यार्यत्तिरिव यौवनस्यानभूवृष्टिरिव धर्मस्य तुष्टिरिव सौभाग्यस्य रूपपरमाणुसृष्टिरिव प्रजापतेः शमस्यापि शान्तिरिव विनयस्यापि विनीतिरिव

संयतिरिव धैर्यस्यापि धृतिरिव विभ्रमस्यापि विश्रान्तिरिव यशोवती नाम्ना महादेवी प्राणानां प्रणयस्य विभ्रमस्य सुखस्य च भूमिरभूत्।

अस्य वक्षसि नरकजितो लक्ष्मीरिव ललाम निसर्ग एव नृपतिरादित्यभक्तो बभूव। प्रतिदिनमुदये स्नातः सितदुकूलधारी धवलकर्पटावगुण्ठितशिराः प्राङ्मुखः क्षितौ जानुभ्यां स्थित्वा कुङ्कुमपङ्कानुलिप्ते मण्डले सवितुः पवित्रपद्मरागपात्रनिहितेन स्वहृदयेनेव सूर्यानुरक्तेन रक्तकमलमण्डलेनार्घ्यन्ददौ। अजपच्च जप्यचरितः प्रत्युषसं माध्यन्दिने दिनान्ते चापत्यहेतोः प्राध्वं प्रयतेन मनसा जप्यपूतो मन्त्रमादित्यहृदयं भक्तजनानुरोधविधेयानि भवन्ति देवतानां मनांसि यतः स राजा कदाचित् ग्रीष्मसमये यदृच्छया सितसुधाधवल्ये हर्म्ये सुष्वाप वामपार्श्वे चास्य द्वितीयशयनीये यशोवती शिश्ये। परिणतप्रायायान्तु श्यामयामामासन्नप्रभातवेलाविलुप्यमानलावण्ये लिलिम्पिषमाणे सीदत्तेजसि तारकेश्वरे कराग्रस्पृष्टकुमुदिनीप्रमोदजन्मनि शिशिरस्वेदइव गलत्यवश्यायपर्यासे मधुमदसुप्तसीमन्तिनीनिश्वासहतेषु संक्रान्तदृग्गेष्विव घूर्णमानेष्वन्तःपुरप्रदीपेषु राजनि रजनीकरविमलनखप्रतिबिम्बिताभिः सम्बाह्यमानइव तारकाभिर्विस्रब्धं प्रसारितैर्दिगङ्गनानामिवार्पितैरङ्गैर्मधुसुरभिभिः स्वहस्त-कमलतालवृन्तवातैरिव निश्वसितैर्मुखश्रिया वीज्यमाने विमलकपोलस्थितेन सितकुसुमशेखरेणेव रतिकेलिकच ग्रहावलम्बितेन प्रतिमाशशिबिम्बेन विराजन्ती स्वपन्ती देवी यशोवती सहसै-

वार्यपुत्र! परित्रायस्व परित्रायस्वेति भाषमाणा भूषणरवैर्व्या-हरन्तीव परिजनमुत्कम्पमानाङ्गयष्टिरुदपतत्।

अथ तेन पृथ्व्यामपि सर्वस्यामश्रुतपूर्वेण किमुत देवीमुखेन परित्रायस्वेति ध्वनिना दग्धइव श्रवणयोरेकपदएव निद्रां तत्याज राजा। शिरोभागाच्च कोपकम्पमानदक्षिणकरा-कृष्टेन कर्णोत्पलादिव निर्गच्छताच्छधारेण धौतासिना सीम-न्तयन्निव दिशामन्तरालं व्यवधायकमाकाशमिवोत्तरीयांशु-कं विक्षिपञ्चामरपल्लवेन करविक्षेपवेगगलितेन हृदयेनेव भयनिमित्तान्वेषिणा भ्रमता दिक्षु वलयेन सत्वरावतारित-वामचरणः कान्तिकम्पितप्रासादपुरःप्रक्षिप्तेनासिधारागो-चरगतेन शीतमयूखमण्डलेनेव खण्डितेन हारेण विराज-मानो लक्ष्मीचुम्बनताम्बूलरसञ्जिताभ्यामिव निद्रया कोपेन चातिलोहिताभ्यां पाटलयन्दिक्पर्यन्तानावद्धान्धकारित त्रि-पादकया भ्रूकुट्या पुनरिव त्रियामां प्रवर्तयन् देवि! न भेतव्यमित्यभिदधानो वेगेनोत्पपात।

सर्वासु दिक्षु विक्षिपञ्चक्षुर्यदा नाद्राक्षीत् किञ्चिदपि तदा पप्रच्छ ताम् भयकारणं अथ गृहदेवतास्विव प्रधा-वितासु यामिकविलासिनीषु प्रबुद्धे च समीपशायिनि परिजने शान्तेच हृदयोत्कम्पकारिणि साध्वसे समभाषत। आर्यपुत्र! जानामि स्वप्ने भगवतः सवितुर्मण्डलान्निर्गत्य द्वौ कुमारौ तेजोमयौ बालातपेन पूरयन्तौ दिग्भागान् वैद्युतमिव जीवलोकं कुर्वाणौ कवचिनावङ्गिनौ गृहीत-शस्त्राविन्द्रगोपकत्वौ रुधिरेण स्नाताविवोत्तमाङ्गघटमाना-ञ्जलिना जगता निखिलेन वन्द्यमानौ कन्यकयैकया चन्द्र-

सूर्याविव सुषुम्ना रश्मितोनिर्गच्छन्त्यानुगम्यमानौ चिति-तलमवतीर्णौ। तौ च वक्त्रं मे विलपन्त्याः शक्षेणोदरं विदार्य प्रवेष्टुमारब्धौ। प्रतिबुद्धास्मि चार्यपुत्र विक्रोशयन्ती वेपमानहृदयेति तस्मिन्नेव क्षणे राजलक्ष्म्याः प्रथमालापः प्रथयन्निव स्वप्नफलमुपहतोऽमरगणप्रधानशङ्खः। भाविनीं भूतिमिवाभिदधाना दध्वनुरमन्दन्दुन्दुभयः चक्राणाच कोणाहतानन्दादिव प्रत्यषनान्दी। जय जीवेति प्रबोधमङ्गल-पाठकानामुच्चैर्वाचस्वेरः। पुरुषस्य वल्लभतुरङ्गमं दूरादरे मन्दं मन्दं सुप्तोत्थितः समानां कृतमधुरह्रेषारवाणां पुरोऽस्य तुषारसलिलशीकरं विकिरन्नारकतमिव यवसंवक्त्रा परवक्त्रे पपात।

निखिलहलिकारेण सम्मणीनां स्फुरता धाम्ना शुभागमो निमित्तेन स्पष्टमाख्यायते लोके।

अरुणइव पुरःसरो रविं पवनइवातिजडो जलागमं
शुभमशुभमथापिवा नृणां प्रथयति पूर्वनिदर्शनोदयः।

नरपतिस्तु तच्छ्रुत्वा प्रियमाणे मान्तःकरणेन तामवादीत्। देवि! किं मुदोऽवसरे विषीदसि। सम्पन्नास्ते गुरुजनाशिषः पूर्णा नो मनोरथाः। परिगृहीतासि कुलदेवताभिः प्रसन्नस्ते भगवानंशुमाली। न चिरेणातिगुणवदपत्यत्रयलाभेनानन्द-यिष्यति भवतीम्। इत्यभिधायावतीर्य च यथा क्रियमाणाः क्रियाश्चकार। यशोवत्यपितु मोषितेन भर्तृभाषितेन ततः सम-तिक्रान्ते कस्मिंश्चित्कालांशे यशोवत्या देव्या राज्यवर्द्धनः प्रथमं संबभूव गर्भे। गर्भस्थितस्यैव यस्य वासेन पाण्डुतामधत्त ज-ननी। गुणगौरवाक्रान्त्येव गाढमुद्वोढुं न शशाक। अमृतरस-

त्तमेनेवाहारं प्रति पराङ्मुखीबभूव। शनैः शनैः उपचीयमानगर्भभारालसा गुरुभिर्वारितापि वन्दमाय कथमपि सखीभिर्हस्तावलम्बनेनानीयत। विश्राम्यन्ती शालभञ्जिकेव समीपगतस्तम्भे तस्तम्भे। कमलशोभनिलीनैरलिभिरिव स्तुतावुद्धर्तुं न शशाक चरणौ। मृणालधवलचरणनखमयूखलग्नैर्भवनहंसैरिव सञ्चार्यमाणा मन्दं मन्दं बभ्राम मणिभित्तिषु प्रतिमास्वपि हस्तावलम्बलोभेन प्रसारयामास करकमलं। किमुत सखीषु मणिकस्तम्भदीधितिमप्यवलम्बितु माचकाङ्क्ष। किं पुनर्भवनलताः समादेष्टुमसमर्थासीत् गृहकार्याणि कर्त्तुं कैव कथा। श्रमा नूपुरभारविदितं चरणयुगलं मनसापि नासहत सौधमारोढुं अङ्गान्यपि नागक्रीडारयितुं दूरे भूषणानि चिन्तयित्वा क्रीडापर्वताधिरोहणमुत्कम्पितस्तनी तत्रास। प्रत्युत्थानेषूभयजानुविहितकरक्लिसलयापि गर्वादिव गर्भेणावार्यत। दिवसमधोमुखी स्तनपृष्ठसंक्रान्तेन पत्या दर्शनोत्सुकहृत्प्रविष्टेन मुखकमलेन प्रीयमाणो ददर्श गर्भम्।

उदरे तनयेन मनसि भर्त्राधिष्ठिता द्विगुणामिव लक्ष्मीमुवाह। पत्युत्सङ्गविमुक्तशरीरा च शरीरपरिचारिकाणामङ्केषु सपत्नीनान्तु शिरःसु च पादौ चकार। अवतीर्णे च दशमे मासि सर्वभूभृत्पक्षपाताय वज्रपरमाणुगिरिभिरिव निर्मितं त्रिभुवनभारवहनसमर्थं शेषफणामण्डलैरिव कल्पितं सकलभूभृत्कम्पकारिणं दिग्गजावयवैरिव विहितमसूत देवी राज्यवर्द्धनम्।

यस्मिंश्च जाते जातप्रमोदान्नृत्यमत्यद्भुताभ्यशायन्त प्रजाः। पूरितासंख्यशङ्खरवमुखरं प्रहतपटहशतपटुरवगम्भीरभेरीनि-

नादनिर्भरभरितभुवनं प्रमोदोन्मत्तमर्त्यलोकमनोहरं मास-मेकदिवसं महोत्सवमकरोन्नरपतिः। अथापरस्मिन्नतिक्रान्ते कस्मिंश्चित्काले कन्दलिनि कुड्मलितकदम्बतरौ कूटजसा-रम्भे स्तिमिततामरसे विकसितचातकचेतसि मूकमानसौकसि नभसि देव्या देवक्या इव चक्रपाणिर्यशोवत्या हृदये गर्भेण सममेव संबभूव हर्षः। शनैरस्याः सर्वप्रजापुण्यैरिव परिगृहीता भूयोऽपि पाण्डुतामङ्गयष्टिर्जगाम। गर्भारम्भेण श्यामायमानचारुचुचुकचूलिकौ चक्रवर्त्तिनः पान्तु मुद्रि-ताविव पयोधरकलशौ स्तन्यार्थमानने निहता दुग्धनदीव दीर्घस्निग्धधवला माधुर्यमधत्त दृष्टिः। सकलमङ्गलाधि-ष्ठितगात्रगरिम्णेव गतिरमन्दायत मन्दं मन्दं चरन्त्या निर्मल-कुट्टिमनिमग्नाः प्रतिबिम्बनिभेन गृहीतपादपल्लवापूर्वसेवा-मिवारेभे पृथ्वी दिवसमयी शयानायाः शयनीयोपाश्रयपत्र-भङ्गपुत्रिकाप्रतिमाविमलकपोलोदरगता प्रसवसमयं प्रतिपाल-यन्ती लक्ष्मीरिवालक्ष्यत। क्षपासु सौधाग्रहताया गर्भोन्मायमु-क्तांशुके स्तनमण्डले संक्रान्तमुडुपतिमण्डलमुपरिगर्भस्य श्वे-तातपत्रमिव केनापि धार्यमाणमदृश्यत। सुप्ताया वासभवन-भित्तिलिखितचित्रचामरग्राहिण्योऽपि चामराणि चालयाञ्चक्रुः। स्वप्नेषु करघृतकमलिनीपलाशपुटसलिलैश्चतुर्भिरपि दिक्करिभि-रक्रियताभिषेकः। प्रतिबुध्यमानायाश्चन्द्रशालासालभञ्जिका-जनो जयशब्दमसकृदजनयत्। परिजनाह्वानेष्वाज्ञापयेत्य-शरीरवाचोविचेरुः। क्रीडया विना सहताज्ञाभङ्गम्।

अपि च चतुर्णामप्यर्णवानामेकीकृतेनाम्भसा स्नातुं वाञ्छा-बभूव। वेलावनलतागृहोदरपुलिनपरिसरेषु पर्यटितुं हृदय

मणिभित्तिषु आत्ययिकेष्वपि कार्येषु सविभ्रमं भ्रूलता चचाल। सन्निहितेष्वपि मणिदर्पणेषु समुत्खाते खड्गपट्टे वीक्षितुं व्यसनमासीत्। उत्सारितवीणा स्त्रीजनविरुद्धा धनुर्ध्वनयः श्रुतावसुखायन्त। पञ्जरकेसरीषु चक्षुररमत। गुरुप्रणामेष्वपि स्तम्भितमिव शिरः कथमपि ननाम। सख्यश्चास्याः प्रमोदविस्फारिते लोचने। आसन्नमहोत्सवस्थानानि निषण्णाश्च महान्तो विविधौषधिधरा भिषजो भूधरा इव भुवो भृतिञ्चक्रुः। पयोनिधीनां हृदयानीव लक्ष्म्या गृहागतानि ग्रीवासूत्रग्रन्थिषु प्रशस्तरत्नान्यबध्यन्त। ततः प्राप्ते ज्यैष्ठामूले मासि बहुलपक्षद्वादश्यामतीते प्रदोषसमये समारुरुक्षति क्षपां यौवने सहसैवान्तःपुरे समुदपादि महोत्सवः। कोलाहलः स्त्रीजनस्य निर्गत्य च ससम्भ्रमं यशोवत्याः स्वहृदयनिर्विशेषाया धात्र्याः सुता सुयात्रेतिनाम्ना राज्ञः पादयोः प्रणिपत्य देव! दिष्ट्या वर्धसे द्वितीयपुत्रजन्मनेति। व्याहरन्ती पूर्णपात्रं जग्राह।

अस्मिन्नेवावसरे राज्ञः परमसम्मतः शतसम्वादितातीन्द्रियादेशदर्शितप्रभावसङ्कलितः ज्योतिषि सर्वासां ग्रहसंहितानां पारदृश्वा सकलगुणगणमध्ये हितोऽहितस्य त्रिकालज्ञानभाक् भोजकस्तारकोनाम गणकः समुपसृत्य विज्ञापितवान्। देव! श्रूयते मान्धाता किलैवंविधे व्यतीपातादिसर्वदोषाभिषङ्गरहितेऽह्नि सर्वेषूच्चस्थानस्थितेष्वीदृशि लग्ने लेभे जन्म। अर्वाक्कृतोऽस्मिन्नन्तराले पुनरेवंविधे योगे चक्रवर्तिजननेनाजनि जगति कश्चिदपरः सप्तानां चक्रवर्तिनामग्रणीः सप्तानां चक्रवर्तिचिह्नानां भाजनं सप्तानां सागराणां पालयिता सप्तानां महारत्नानां पात्रं सप्ततन्तूनां सर्वेषां प्रवर्तयिता सप्तसप्तिसमः-

सुतोऽयं देवस्य जातइति अत्रान्तरे स्वयमेवानाध्मापितास्तारं मधुरं शङ्खा विरेसुः । अताड़ितोऽपि दिक्षु क्षुभितजलधिध्वनि-धीरञ्जुगुञ्जुरभिषेकदुन्दुभयः । अनाहतान्यपि मङ्गलतूर्याणि रेणुः । सर्वभुवनाभयघोषणापटह इव दिगन्ते बभ्राम तुर्यप्रतिशब्दः । विधुतकेसरसटाश्च साटोपगृहीतदूर्वापल्लव-कवलग्रासैः मुखपटैः सममुह्रेषन्त हृष्टवाजिनः सलील-मुत्क्षिप्तैर्हस्तपल्लवैर्न्नृत्यन्त इव अवःसुभगञ्जगजुर्गजाः । ववौ चिराच्चक्रायुधमुत्सृजन्त्याः श्रियोनिश्वास इव सुरतकुसु-मामोदसुरभिर्दिव्यानिलः । यज्वनां मन्दिरेषु प्रदक्षिणा-शिखाकलापाः कथितकल्याणागमाः प्रज्वलन्तु अनिन्धना-वैतानवह्नयः । भुवःस्यन्दास्तपनीयशृङ्खलावन्धवन्धुरकलशकोशाः समुद्गमन्महानिधयः प्रहतमङ्गलतुर्यप्रतिशब्दनिभेन दिक्षु दिक्पालैरपि प्रमोदादक्रियतेव हृष्टिष्ट्विककलकलः । तत्क्षण एव शुक्लवाससो ब्रह्ममुखकृतयुगप्रजापतय एव प्रजा-हृदये समुपतस्थिरे द्विजातयः । साक्षाद्धर्म एव शान्त्युदक-हस्तः प्रादुरभूत् पुरोधाः पुरातन्यः स्थितय इवाहस्थ-न्तागतबान्धवहृद्याः । प्रशस्यश्मश्रुजालजटिलाननानि बहल-मलपङ्कवालकायानि विनश्यतः कलिकालस्य बान्धवकुलानी-वाकुलान्यधावन्त मुक्तानि बन्धनानि । तत्कालापक्रान्तस्य शिबिरश्रेणय इवालक्ष्यन्त लोकलुण्ठिता विपणिवीथ्यः । विलस-दुर्मुखवामनषण्ढवेष्टिताः साक्षात् जातमात्रदेवता इव बद्ध-बालकव्याकुला नानाक्ष्ववर्द्धन्त धात्र्यः । प्रावर्तत विगतराज-कुलस्थितिरपहृतप्रतिहारायतिरपनीतवेत्रिवेत्रो निर्दोषान्तः-पुरप्रवेशः समस्तामिपरिजनो निर्विशेषबालवृद्धः समानशिष्टा-

शिष्टजनो दुर्विभ्रमत्तामत्त-प्रविभागस्तुल्ययुवतीवेश्याबालाविलो विलासः।

प्रनृत्यत्सकलकटकजनः पुत्रजन्मोत्सवो महान् अपरेद्यु-रारभ्य सर्वाभ्यो दिग्भ्यः स्त्रीराज्यानीवावर्जितानि असुर-विवराणीवापाहृतानि नारायणावरोधानीव प्रज्वलितानि अपराणिव महीमवतीर्णानि कुलानि परिजनेन पृथुकर-ण्डकपरिगृहीतस्नानीयसुमनःस्फटिकशिलाशकला शुक्ल-कर्पूरखण्डपरिपूरिताः पात्रीः कुङ्कुमवासभाञ्जि भाजनानि च मणिमयानि सहकारतैलतुच्छतनुतरकेसरजटिलानि चन्दनधवलपूगफलपाण्डुरदन्तशफरकाणि कूजन्मधुकरकु-लपीयमानपारिजातपरिमलानि पटलकानि च सिन्दूरपा-त्राणि च पिष्टातकपात्राणि च लतालम्बमानविकटवीटिकांश्च ताम्बूलस्तबकान् बिभ्राणेनानुगम्यमानानि चरणानि कुट्टन-रणितमणिनूपुरमुखरितदिङ्मुखानि नृत्यन्ति राजकुलमाग-च्छन्ति समन्तात्सामन्तान्तःपुरसहस्राण्यदृश्यन्त।

शनैः शनैरजृम्भत क्वचिन्नृत्यानुचितचिरन्तनप्र-शोलीनकुलपुत्रालोकनलास्यप्रथितपार्थिवानुरागः क्वचिदन्तः-स्मितक्षितिपालवीक्षितक्षीवक्षुद्रदासीकथ्यमानराजवल्लभः क-चिन्मत्तकटककुट्टनीकण्ठलग्नप्रबुद्धसमत्तनृत्यनिर्भरहसितनर-पतिः क्वचित् क्षितिपाक्षिसंज्ञानिर्दिष्टदुष्टमागेरकगीति-सूच्यमानचौर्यरतमपञ्चः। क्वचिन्मदोत्कटकुटहारिकापरि-ष्वज्यमानजरत्प्रव्राजितजनहासः। क्वचिदन्योन्यस्पर्धोद्धुर-विटपेटकारब्धावाच्यवचनयुद्धः। क्वचिन्नृपबालबलात्कारन-र्त्यमाननृत्यानभिज्ञान्तःपुरपालभावितभुजिष्यः सपर्वत दू

कुसुमराशिभिः सधारागृह इव शीधुप्रपाभिः सचन्दनवन इव पारिजातामोदैः सनीहार इव कर्पूररेणुभिः साट्टहास इव पटहैः सामृतमथन इव कलकलैः सावर्त इव रासकमण्डलैः सरोमाञ्च इव भूषणमणिकिरणैः सपट्टबन्धन इव चन्दनललाटिकाभिः सप्रसव इव प्रतिशब्दकैः सप्ररोह इव प्रासाददानेत्सवप्रमोदः ।

स्कन्धावलम्बितकेसरमालिनः काम्बोजवाजिन इवास्कन्दतिस्तरलतारकाहारिणा इवोड्डीयमानाः सगरसुता इव खनित्रै निर्दयैश्चरणाभिघातै दारयन्तो भुवनैकसहस्रसङ्ख्याश्चिक्रीडुर्युवानः । कथमपि तालावेगचरणसङ्क्षोभं चक्षमुः क्षमा क्षितिपालकुमाराश्च खेलतामन्योन्यास्फालनैराभरणेषु मुक्ताफलानि फेलुः । सिन्दूररेणुना पुरस्त्यन्नहिरण्यगर्भगर्भशोणितशोणमिव ब्रह्माण्डकपालमभवत् । पटवासपाण्डुपटलेन प्रकटितमन्दाकिनीसैकतसहस्रमिव शुशुभे नभःस्थलं प्रकीर्यमाणपिष्टातकपरागपुञ्जपिञ्जरितातपा भुवनक्षोभशीर्णपितामहकमलकिञ्जल्कराजिरञ्जिता इव रेजुर्दिवसाः । सङ्घट्टितविघट्टितहारपतितमुक्ताफलपटलेषु चस्खाल लोकः स्थानस्थानेषु मन्दमन्दास्फाल्यमानलिङ्गेन शिञ्जानमञ्जुवेणुना झणझणायमानझल्लरीकेन ताड्यमानतन्त्रीपटहकेन वाद्यमानतालालाबुवीणेन झणत्कांस्यकोशीकलितकाहलेन समकालदीयमानोत्तालतालकेनातोद्यानुगम्यमानाः पदेपदे झणझणितभूषणरवैरपि सहृदयैरिवानुवर्त्यमानलयाः कोकिला इव मदकलकाकलीकोमलालापिन्यो विटानां कर्णामृतान्यश्लीलरासकपदानि गायन्त्यः मुण्डमालि-

काः सकर्णपल्लवाः सचन्दनतिलकाः समुच्छ्रिताभिर्बलयावलीभिर्वाचालिताभिर्वाङ्गलिकाभिः सवितारमिवाभिभूयानन्दयन्त्यः कुङ्कुमप्रच्छटिरुचिरकायाः किशोर्य इव वल्गन्त्यो-नितम्बबिम्बलम्बिविकटकुरण्डशेखराः प्रदीप्ता इव रागाग्निना सिन्दूरच्छटाच्छुरितमुखमुद्राजासनपट्टिपङ्क्त्य इवाप्रतिहतशासनस्य कन्दर्पस्य मुष्टिप्रकीर्यमाणकर्पूरपटवासपांसुला मनोरथसञ्चरणरथ्या इव यौवनस्योद्दामकुसुमदामोत्ताडिततरुणजनाः प्रतिहार्य इव महोत्सवस्य प्रचलितपत्रकुण्डलालसन्त्यो लता इवानन्दनन्दनस्य ललितपदहंसकलरवमुखराः समुल्लसन्त्योवीचय इव रागसागरस्य वाच्यावाच्यविवेकशून्या बालक्रीडा इव सौभाग्यस्य घनपटहरवोत्कण्टकितगात्रयष्टयः केतक्य इव कुसुमधूलीमुत्किरन्त्यः कमलिन्य इव समुत्फुल्लाननकमलाः कुमुदिन्य इव रात्रावनुपजातनिद्रा आविष्टा इव नरेन्द्रवृन्दपरिगृहीताः प्रीतय इव हृदयमपहरन्त्यो गीतय इव रागमुद्दीपयन्त्यः परपुष्टा इवोन्मादमानयन्त्यो मदमपि मदयन्त्य इवानन्दमप्यानन्दयन्त्य इव रागमपि रञ्जयन्त्य इव नृत्यमपि नर्तयमाना इवौत्सुक्यमप्युत्सुकयन्त्य इव कटाक्षेक्षितेषु पिबन्त्य इवापाङ्गशुक्तिभिर्जनेषु संयमन्त्य इव नखमयूखजालैः कोपाभिनयेषु ताडयन्त्य इव भ्रूलताविभागैः प्रणयसम्भाषणेषु वर्षन्त्य इव सर्वरसान् चतुरचङ्क्रमणेषु विकिरन्त्य इव विकारान् पण्यविलासिन्यः प्रानृत्यन् ।

अन्यत्र तु वेत्रिवेत्रवित्रासितजनदत्तान्तरालाः श्रिगमाणधवलातपत्राः वनदेवता इव कल्पतरुतलचारिण्यः काश्चित्स्कन्धोभयपार्श्वलम्बोत्तरीयलग्नहस्ता लीलादोलाधिरूढा इव

प्रेङ्खन्त्यः काश्चित्कनककेयूरकोटिपाट्यमानपट्टांशुकतरङ्गास्त-रङ्गिण्य इव तरङ्गचक्रवाकसीमन्त्यमानस्रोतसः काश्चिदुद्धूयमान-चामरसटालग्नविकटकबलितकटाक्षाः सरस्य इव हंसावकृष्य-माणनीलोत्पलवनाः काश्चिच्चरणच्युतलाक्षारुणस्वेदरससिच्य-मानभवनहंसाः सन्ध्यारागरज्यमानेन्दुबिम्बा इव कौमुदी-रजन्यः काश्चित्कर्णनिहितकाञ्चनकाञ्चीगुणरञ्जितकञ्चुक-त्रिकाराः। कुञ्चितभ्रुवः कामवागुरा इव प्रसारितबाहुपाशा राजमहिष्यः प्रारब्धनृत्ता विलेसुः।

सर्वतश्च नृत्यतः स्त्रैणस्य गलद्भिः पादालक्तकैररुणित-रागमयीव शुशुभे क्षोणी समुल्लसद्भिस्तनमण्डलैर्मङ्गलकलश-मयइवाभवन्महोत्सवः भुजलतानां विक्षेपैर्मृणालमय इव रराज जीवलोकः समुल्लसद्भिर्विलासस्मितैस्तडिन्मय इवाक्रि-यत कालः चञ्चताञ्चलुषामंशुभिः कृष्णसारमया इवास-न्वासराः समुच्चलद्भिः शिरीषस्तबककर्णपूरैः शुकपिच्छ-मयइव हरितच्छायो बभूवातपः स्रंसमानैर्धम्मिल्लपल्लवैः कज्जलमयमिवालक्ष्यतान्तरिक्षम् उच्छ्रितैर्हस्तपल्लवैः कमल-मय्यइव बभासिरे दृष्टयः माणिक्येन्द्रायुधानामर्चिषाञ्चाष-मय्यइव चकाशिरे रविमरीचयः रणतामाभरणानां प्रति-शब्दैः किङ्किणिमय्यइव शिशिञ्जिरे दिशः जात्याप्युन्मादिन्य-इव रमण्यो रेजिरे वर्षीयांसोऽपि ग्रहग्रस्ताइव नापत्रेपिरे विद्वांसोऽपि मत्ता इवात्मानं विसस्मरुः निनर्तिषया मुनी-नामपि मनांसि पुस्फुरुः सर्वस्वञ्च ददौ नरपतिः दिशि दिशि कुबेरकोशादिवालुप्यन्त लोकेन द्रविणराशयः।

एवञ्च प्रवृत्ते तस्मिन्महोत्सवे शनैः शनैः पुनरतिक्रामति काले देवस्योत्तमाङ्गनिहितरक्षासर्षपे समुन्मिषत्प्रतापाग्निस्फुलिङ्ग इव गोरोचनापिञ्जरितवपुषि समभिव्यज्यमानसहजसत्त्ववह-हाटकबन्धविकटव्याघ्रनखपङ्क्तिमण्डितग्रैवेयके हृदयोद्भिद्यमान-दर्पाङ्कुर इव प्रथमाव्यक्तजल्पिनि सत्यस्य शनैः शनैरोङ्कार-मिव कुर्वाणे मुग्धस्मितैः कुसुमैरिव मधुकरकुलानि लोक-हृदयान्याकर्षति जननीपयोधरकलशपयः शीकरसेकादिव जायमाने लीलाहसिताङ्कुरैर्दशनकैरलङ्क्रियमाणमुखकम-लके चारित्र इवान्तःपुरेण पाल्यमाने मन्त्र इवाप्तशिवमण्डलेन रक्ष्यमाणे वृत्त इव कुलपुत्रलोकेनाशून्यमाने यशसीवात्मवंशेन संवर्ध्यमाने मृगपतिपोत इव रक्षापुरुषशस्त्रपञ्जरगते धात्री-कराङ्गुलीलग्ने पञ्चषाणि पदानि प्रयच्छति हर्षदेवे षष्ठं वर्ष-मवतरति राज्यवर्द्धने देवी यशोवती तृतीयेन गर्भेणाधत्त ना-रायणमूर्तिरिव वसुधान्देवी राज्यश्रियम्। पूर्णेषु प्रसवदिवसेषु दीर्घानुरक्तनेत्रोत्पलामुत्पलिनीमिव सरसी हंसमधुरस्वरां शरदमिव प्रावृट् कुसुमसुकुमारावयवां वनराजिमिव मही कनकावदातां वसुधारामिव द्यौः प्रभावर्षिणीं रत्नजातामिव वेलालोकजनानन्दकारिणीं चन्द्रकलामिव प्रतिपत्सहस्रनेत्र-दर्शनयोग्यां जयन्तीमिव शची सर्वभूभृदभ्यर्हितां गौरीमिव तामसूतवती दुहितरम्। यथा च द्वयोः सुतयोरुपरिस्तन-योरिवैकावलीलतया नितरामराजत जननी।

अस्मिन्नेव तु काले देव्या यशोवत्या भ्राता सुतनयमष्टवर्ष-देशीयमुद्धूयमानकुटिलशिखण्डं खण्डपरशुहुङ्कारधूमलेखा-नुबन्धमूर्द्धानं मकरध्वजमिव पुनर्जातमेकेनेन्द्रनीलमणिकु-

खड्गांशुश्यामलितेन शरीरार्द्धेनेतरेण त्रिखण्डमुक्ताफला-लोकधवलितेन संक्रान्ततारमिव हरिहलधरयोर्दर्शयन्तं पीन-प्रकोष्ठप्रतिष्ठितपुष्परागलोहवलयं परशुराममिव सततपर्या-क्षीणपरशुपाशचिह्नितं बालताङ्गतं कर्णसूत्रग्रथितभङ्गुरप्र-वालाङ्कुरं हिरण्यकशिपुमिवोरःकाठिन्यखण्डितनरसिंहनख-खण्डं पुनर्गृहीतजन्मान्तरं शैशवेऽपि सावष्टम्भं बीजमिव वीर्य-द्रुमस्य भण्डिनामानमनुचरं कुमारयोरर्पितवान्। अवनि-पतेस्तु तस्योपरि पुत्रयोस्तृतीयस्य नेत्रयोरिवेश्वरस्य तुल्यं दर्शनमासीत्। राजपुत्रावपि सकलजीवलोकहृदयानन्द-दायिनौ तेन प्रकृतिदक्षिणेन मधुमाधवाविव मलयमारुते-नोपेतौ नितितरां रेजतुः। क्रमेण चापरेणेव भ्रात्रा प्रजा-नन्दनेन सह संवर्द्धमानौ यौवनमवतेरतुः।

अथ चन्द्रसूर्याविव विस्फुरद्यशःप्रतापाक्रान्त-भुवनाभिरामदुर्निरीक्ष्यावग्निमारुताविव समभिव्यक्ततेजो-बलावेकीभूतौ शिलाकठिनकायबन्धौ हिमवद्विन्ध्याविवाचलौ महावृषाविव कृतयुगयोग्यौ वरुणगरुडाविव हरिवाहनविभक्त-शरीरौ इन्द्रोपेन्द्राविव गजेन्द्रगामिनौ कर्णार्जुनाविव कुण्डल-किरीटधरौ पूर्वापरदिग्भागाविव सर्वतेजस्विनामुदयास्तमय-सम्पादनसमर्थौ वनन्ताविवातिमानमासन्नवेलागलनिरोध-सङ्कटे कुटीरके तेजसः पराङ्मुखीं छायामपि जुगुप्समानौ प्रतिबिम्बेनापि पादनखलग्नेन लज्जमानौ शिरोरुहाणामपि भङ्गेन दुःखमवतिष्ठमानौ चूडामणिसंक्रान्तेनापि द्वितीयात-पत्रेणातपत्रप्रमाणौ भगवती पद्ममुखेऽपि स्वामिशब्देनासुखा-यमानश्रवणौ दर्पणदृष्टेनापि प्रतिपुरुषेण दूयमाननयनौ

शल्याञ्जलिष्ववटेष्वपि शूलायमानोत्तमाङ्गौ जलधरच्छते-मापि धनुषा धूयमानहृदयालेऽव्यक्तिभिरप्यप्रणामद्भिः स-न्ताप्यमानचरणौ परिमितमण्डलसन्तुष्टतेजसः सवितुरुद-यमप्यबहुमन्यमानौ भूभृद्रुपहृतलक्ष्मीकं सागरमप्युपहसन्तौ। बलवन्तमनधिगतविग्रहं मारुतमपि निन्दन्तौ हिमवतापि चमरीबालव्यजनवीजितेन दह्यमानौ जलनिधीनामपि शरैः खिद्यमानमनसौ चतुःसमुद्राधिपतिं परं प्रचेतसमप्यसह-मानावपहृतच्छत्रान् पीतच्छायानवनिपालान् कुर्वाणौ साधु-ष्वसेवितप्रसन्नावपि सुखे मधु चरन्तौ दुष्टराजवंशानुष्णाणौ दूरस्थितानपि म्लानिमुपनयन्तौ प्रतिदिवसं शस्त्राभ्यास-श्यामिकाकलङ्कमशेषराजप्रतापाग्निनिर्वापणमसीमलिनितमिव करतलमुद्वहन्तौ योग्याकालेष्वतिधीरैर्धनुर्ध्वनिभिरभ्यर्णोप-भोगाय दिग्वधूभिरिवालपन्तौ राज्यवर्धन इति हर्षवर्धन इति सर्वस्यामेव पृथिव्यामाविर्भूतशब्दप्रादुर्भावौ स्वल्पीयसैव का-लेन द्वीपान्तरेष्वपि प्रकाशतां जग्मतुः।

एकदा तु तौ आहूय भुक्तवानभ्यन्तरगतः पिता सस्नेह-मवादीत्। वत्सौ! प्रथमं राज्याङ्गेषु दुर्लभाः सद्भृत्याः प्रायेण परमाणव इव समवायेष्वनुगुणीभूयाद्रव्यं कुर्वन्ति पार्थिवं क्षुद्राः। क्रीडारसेन नर्तयन्तो मयूरतां नयन्ति वालिशाः दर्पणमिवा-नुप्रविश्यात्मीयां प्रकृतिं संक्रामन्ति पल्लवकाः स्वप्ना इव मिथ्या-दर्शनैः सद्बुद्धिं जनयन्तोदर्शयन्ति विप्रलम्भकाः गीतनृत्य-हसितैरुन्मत्ततामापादयन्ति उपेक्षिता विकारा इव वातिका आतङ्का इव तृष्णावन्तो न शक्यन्ते ग्रहीतुमकुलीना मानसे मीनमिव स्फुरितमभिप्रायं गृह्णन्ति जालिकायमपरिकामि-

वाम्बरे चित्रमालिखन्त्युड्डीतकाः। शल्यं हृदये निक्षिपन्ति मार्गणाः यतः सर्वैरेभिर्दोषानुषङ्गैरसङ्गतौ बहुविधोपाधिभिः परीक्षितौ शुचिविनीतौ विक्रान्तावभिरूपौ मालवराजपुत्रौ भुजाविव मे शरीरादव्यतिरिक्तौ कुमारगुप्तमाधवगुप्तनामानौ भ्रातरौ अस्माभिर्भवतोरनुचरा उचितौ चिन्तितौ।

तयोरुपरि युवाभ्यामपि नान्यपरिजनसामान्याभ्यां भवितव्यम्। इत्युक्त्वा तयोराह्वानाय प्रतिहारमादिदेश न चिराच्च द्वारदेशविनिहितलोचनौ राज्यवर्द्धनहर्षवर्धनौ प्रतिहारेण सह प्रविशन्तमग्रतो ज्येष्ठमष्टादशवर्षदेशीयन्नात्युच्चं नातिखर्वमतिगुरुभिः पदन्यासैरनेकनरपतिसञ्चरणचलान्निश्चलीकुर्वाणमिव।वींमनवरताभ्यस्तलङ्घनघनोपचयकठिनमांसमेदुरादूरुद्वयान्निष्पतितेनेवानुत्तणजानुग्रन्थिमूलेन तनुजङ्घाकाण्डयुगलेन भासमानमुल्लिखितपार्श्वप्रकाशितकृशिम्ना मध्येन मन्दरमिव सुरासुरभ्रमितवासुकिनिकर्षणक्षीणेनालक्ष्यमाणमतिविस्तीर्णेनोरसा स्वामिसम्भावनानामपरिमितानामवकाशमिव प्रयच्छन्तं प्रलम्बस्य भुजयुगलस्य निमग्नजलितैर्विक्षेपै रतिदुस्तरन्तरन्तमिव यौवनोदधिं वामकरकटकमाणिक्यमरीचिमञ्जरीजालिन्या समुद्भिद्यमानप्रतापानलशिखापल्लवएव चापगुणकिणलेखयाङ्कितप्रकोष्ठमालोहिनीमुच्चां तटावलम्बिनी मस्तग्रहणव्रतविधृतामरौरवीमिव त्वचं कर्णाभरणमणेरुच्चं विभ्राणमुत्कोटिकेयूरपत्रभङ्गपुत्रिकाप्रतिबिम्बगर्भकपोलं मुखचन्द्रमसमिव हृदयस्थितरोहिणीकमुद्वहन्तमचलस्तिमितारकेण चक्षुषाधोमुखेन शिक्षयन्तमिव लक्ष्मीलाभं तानि च सुखानि पङ्कजवनानि विनयं स्वाम्यनुरागादि-

बाम्नानमुत्तंसितकृतं शिरसि धारयन्तमिन्द्रियाकर्षणभङ्गभी-
ततया सकलकामुकार्पितामिवातिनम्रतां प्रकाशयन्तं शैशव
एव निर्जितैरिन्द्रियैररिभिरिव संयतैः शोभमानं प्रणयिनी-
मिव विश्वासभूमिं कुलपुत्रतानुवर्तमानं तेजस्विनमपि शी-
लेनाह्लादकेन सवितारमिव शशिनान्तर्गतेन राजमानमचला-
नामपि कायकार्कश्ये गर्वमिवाचरन्तम् दर्शनक्रीतमानन्दह-
स्ते विक्रीणानमिव जनं सौभाग्येन कुमारगुप्तं प्रस्थितस्य तस्य
कनीयांसं अतिप्रांशुतया गौरवतया च मनःशिलाशैलमिव सञ्च-
रन्तमनुच्चणमालतीशेखरनिभेन निर्जिगमिषया गुरुणा शिर-
सि चुम्बितमिव यशसा परस्परविरुद्धयोर्विनययौवनयोश्चिरात्
प्रथमसङ्गचिह्नमिव भ्रूभङ्गतकेन कथयन्तमतिधीरतया हृदयनि-
वेशितां स्वामिभक्तिमिव निश्चलां दृष्टिं धारयन्तमच्छाच्छचन्द-
नरसानुलेपेन शीतलं सन्निहितहारोपभारं वक्षःस्थलमनन्त-
सामन्तसुकान्तिश्रान्तायाः श्रियो विशालं विश्रामशयनशिला-
तलमिवाचचाणम् चक्षुः कुरङ्गैः घोणावंशावरोधैः स्कन्धपीठं
महिषैः प्रकोष्ठबन्धं व्याघ्रैः पराक्रमं केशरिभिर्गतं मतङ्गजैः
मृगयाव्यपतिशेषैर्भूतैरुत्क्रोशमिव दत्तं माधवगुप्तं ददर्शतुः ।

प्रविश्य च तौ दूरादेव चतुर्भिरङ्गैरुत्तमाङ्गेन मां स्पृशन्तौ
नमश्चक्रतुः स्निग्धनरेन्द्रदृष्टिनिर्दिष्टामुचितां भूमिं भेजाते मुहू-
र्तं च स्थित्वा नरपतिरादिदेश तौ अद्य प्रभृति भवद्भ्यां निदेशवर्ति-
भ्यामहर्निशमपास्तपरिवाराभ्यां प्रतिबिम्बाभ्यामिवाङ्गभूताभ्या-
मनयोः कुमारयोश्चलतोस्तिष्ठतोः स्वपतोर्जाग्रतोः क्षणम-
प्यन्तिकन्न मोक्तव्यम्। अचिराच्च सकलसंकल्पाः कल्पतरव इवा-
भिमतसफलसम्पत्प्रकर्षविशेषप्रदा भविष्यन्तीति। तदाकर्ण्य

यदाज्ञापयति देवइति मेदिनीदोलायमानमौलिभ्यां युगपदभिहिते ताभ्यामुत्थाय राज्यवर्द्धनहर्षवर्द्धनौ पितरं प्रणमतुः तावादाय निर्जग्मतुः। ततश्चारभ्य क्षणमपि निमेषोन्मेषाविव चक्षुर्गोचरादनपयान्तौ उच्छ्वासनिश्वासाविव नक्तन्दिवमभिमुखस्थितौ भुजाविव सतत पार्श्वस्थितौ कुमारयोर्बभूवतुः।

अथ राज्यश्रीरपि नृत्यगीतादिकलासु विदग्धासु सखीषु प्रतिदिन मुपचीयमानपरिचया शनैः शनैरर्चिता परिमितैरेव दिवसैर्यौवनमारुरोह। निपेतुरेकस्यां तस्यां शरा इव लक्ष्यभुवि भूभुजां सर्वेषां लाभाभिलाषाः। दूतसंप्रेषणादिभिश्च तां ययाचिरे राजानः कदाचित् राज्यान्तःपुरप्रासादावस्थितो बाह्यकक्षावस्थितेन पुरुषेण स्वप्रस्तावागतां गीयमाना मार्य्यामशृणोत्।

उद्वेगमहावर्त्ते वातयति पयोधरोन्नमनकालः।
सरिदिव तटमनुवर्षं विवर्द्धमाना सुता पितरम्॥

ताञ्च श्रुत्वा पार्श्वस्थितां महादेवीमुत्सारितपरिजनो जगाद। देवि! तरुणीभूता वत्सा राज्यश्रीः। त एतदीया गुणा गुणाइव क्षणमपि हृदयान्नायाति मे चिन्ता यौवनारम्भे कन्यकानामिन्धनीभवन्ति पितरः सन्तापानलस्य। हृदयमन्धकारयति मेघदिवसमिव सपयोधरोन्नतिरस्यां केन वा कृतानभिमतास्थिति जगति। यदङ्गसम्भूतान्यपत्यान्यङ्कलालितान्येतासां गत्या संस्कृतैर्नीयन्ते। एतानि तानि तानि खल्वङ्गनस्थानानि संसारस्य सेयं सर्वाङ्गनापि शनिशोकाग्नेर्दाहशक्तिः। यदेतदपत्यत्वे समानेऽपि जायायां दुहितरि दूयन्ते सन्तः। एतदर्थं सकालएव कन्यकाभ्यः प्रयच्छन्ति सलिलमश्रुभिः साधवएव तद्भयादकृत-

दारपरिग्रहाः परिहृतगृहवसतयः शून्यानि वनान्यधिशेरते मुनयः कोनाम सचेताः सहेत विरह मपत्यानां यथा यथा समापतन्ति दूतावरणाय वराणां लज्जमानेव तन्तथा तथा नितरां प्रविशति मे हृदयं वराकी किं क्रियते तथापि गृहगतैरनुगन्तव्या एव लोकवृत्तयः। प्रायेण सत्स्वप्यन्येषु वरगुणा एव रज्यन्ते धीमन्तः धरण्यां भूभृन्मूर्ध्नि स्थितो महेश्वरपदन्यासस्तवसकलभुवन नमस्कृतो मौखरी वंशः। तत्रापि तिलकभूतस्यावन्तीवर्मणस्तनुजोऽग्रजो गृहवर्मनामा ग्रहपतिरिव गाङ्गतं पितरं तुगुणैरेनां प्रार्थयते यदि भवत्या अपि मतिरनुमन्यते तत तस्मै दातुमिच्छामीत्युक्तवति भर्तरि दुहितृस्नेहकातरहृदया सुलोचना देवी प्रत्युवाच।

आर्यपुत्र! संवर्द्धनमात्रोपयोगिन्यो धात्रीनिर्विशेषाः खलिहमातरः कन्यकानान्दाने तु प्रमाणमासां पितरः। केवलं कवाक्तविशेषस्तु दूरेण तनयस्नेहादतिरिच्यते दुहितृस्नेहः। यथानया यावज्जीवमावयोराधितां प्रतिपद्यते तथार्यपुत्र एव जानातीति राजा तु जातनिश्चयोदुहितृदानं प्रति समाहूय सुतामपि विदितार्थामकार्षीत्। शोभनदिवसे गृहवर्मणा प्रेषितस्य प्रार्थयितुं पूर्वागतस्य प्रधानपुरुषस्य करे सर्वराजसमक्षं दुहितृदानजलमपातयत्। जातमुदि कृतार्थे च गते तस्मिन्नासन्नेषु विवाहदिवसेषूद्दामदीयमानताम्बूलपटवासकुङ्कुमकुसुमप्रसारितसर्वलोकं सर्वदेशादिश्यमानशिल्पसार्थागमनमवनिपालपुरुषगृहीतसमग्रग्रामिणोऽपकरणसम्भारं राजदौवारिकोपनीयमानानेक-नृपोपायनमुपनिमन्त्रितोपगतबन्धुवर्गसंवर्गणान्यग्रराजवल्लभलब्धमधुमदप्रचण्डचर्मकारकरपुटोल्ला-

लिकोणपटुविघटनरणन्महलपटहं पिष्टपञ्चाङ्गुलमध्यमानो-
ज्ज्वलमुसलशिलाद्युपकरणमशेषाशामुखावर्जितचारणपरम्परा
पूर्यमाणप्रकोष्ठप्रतिष्ठाप्यमानेन्द्राणीदैवतं सीताकुसुमविले-
पनवासःसत्कृतैः सूत्रधारैराधीयमानविवाहवत् पतन्मुचकैश्च
वर्णसुधाकर्पूरस्कन्धै-रधिरोहिणीसमारूढैर्धवलीक्रियमाणप्रा-
सादप्रतोलिप्रकारशिखरं क्षुण्णचाल्यमानकुसुमसम्भाराम्भःप्रव-
र्त्यमानजनपदपटपल्लवनिरूप्यमाणयौतकयोग्यमातङ्गतुरङ्गतर-
ङ्गिताङ्गणञ्चाभियुक्तगणकगृह्यमाणलग्नगुणगन्धोद्दामहिमकर-
सुखप्रणाल्या पूर्यमाणक्रीडावापीसमूहं हेमकारचक्रप्रक्रान्त-
हाटकघट्टनटङ्कारवाचालितालिन्दकमुत्थापिताभिनवभित्तिपात्य-
मानबहलवालुकाकरण्डकलेपाकुललेपकलोकं चतुरचित्रका-
रचक्रवाललिख्यमानमङ्गलालेख्यं लेप्यकारकदम्बकक्रिय-
माणमृण्मयमीनकूर्ममकरनालिकेरकदलीपूगवृक्षं क्षितिपालैः
स्वयमाबद्धकक्ष्यैः स्वार्पितकर्मशोभासम्पादनाकुलैः सिन्दूर-
कुट्टिमभूमिश्च मसृणयद्भिर्विहितसरसार्पणहस्तविन्यस्तालक्तक-
पाटलांश्च चूताशोकपल्लवलाञ्छितशिखरानुद्वाहवितर्दिकास्त-
म्भानुत्तम्भयद्भिः प्रारब्धविविधव्यापारमासूर्योदयाच्च प्रवि-
ष्टाभिः सुभगाभिः सुरूपाभिः सतीभिः सुवेषाभिरविध-
वाभिः सिन्दूररजोराजिरञ्जितललाटाभिर्वरवधूगोत्रग्रह-
णगर्भाणि श्रुतिसुखानि मङ्गलानि गायन्तीभिर्बहु-
विधवर्णदिग्धाङ्गुलीभि र्ग्रीवासूत्राणि विचित्रयन्तीभिश्च लता-
लेख्यकुशलाभिः कलांश्च विमलांश्च शीतलाश्चलाजिराणि शराव
श्रेणीश्च मण्डयन्तीभि र्भिन्नपुटकार्पासे कुलपल्लवांश्च वैवाहिक-
कङ्कणोर्णाभिसंग्रथ्नांश्च रञ्जयन्तीभिर्वर्णसूत्रघनीकृतकुङ्कुम-

बालकमिश्रितानङ्गरागान् , लावण्यविशेषकृन्ति मुखालेपनानि कल्पयन्तीभिः सक्कोलनिश्वासजाफलाश्च, रत्नस्फीतस्फाटिककर्पूरशकलखचितान्तरालाश्चषकमालाश्च रचयन्तीभिः समन्तात्सामन्तसीमन्तिनीभिर्व्याप्तं बहुविधभक्तिनिर्माणनिपुणपुराणपुरन्ध्रीभिर्बध्यमानैर्वेदैश्चाचारचतुरान्तःपुरजरतीजनितपूजाराजमानरजकरञ्ज्यमानैश्च रक्तैश्च उभयपटोपान्तलग्नपरिजनप्रेङ्खोलिते छायासु शोष्यमाणैः शुक्लैश्च कुटिलकमलकूपक्रियमाणपल्लवपरभागैरपरैरारब्धकुङ्कुमपङ्कस्थासकच्छुरणैरपरैर्वद्धभुजभुजिष्याभुज्यमानभङ्गुरोत्तरीयैः क्षौमैश्च बादरैश्च बालतन्तुकैश्चांशुकैश्च निर्मोकनिभैरकठोररम्भागर्भपत्रकोमलैर्निश्वासहार्यैः स्पर्शानुमेयैर्वासोभिः सर्वतः स्फुरद्भिरिन्द्रायुधसहस्रैरिव संच्छादितमुज्ज्वलनिचोलकावकुण्ठ्यमानोपधानैर्हंसतूलशयनीयैश्च तारास्तरमुक्ताफलोपचीयमानैः कञ्चुकैश्चानेकोपयोगपाच्यमानैश्चापरिमितैः पट्टपटीसहस्रैरभिनवरागकोमलरज्यमानैश्च पटवितानैः स्तम्भकनिवहनिरन्तराच्छाद्यमानसमस्तपटलैश्च मण्डपैरुच्छ्रितपटवेष्ट्यमानैश्च स्तम्भैरुज्ज्वलरमणीयश्चोत्सुकश्च पर्याकुलश्च मङ्गल्यश्चासीद्राजकुलम् ।

देवी तु यशोवती विवाहोत्सुकपर्याकुलहृदया हृदयेन भर्तरि कुतूहलेन जामातरि स्नेहेन दुहितरि उपचारेण निमन्त्रितस्त्रीष्वादेशेन परिजने शरीरेण सञ्चरणे चक्षुषा कृताकृतप्रत्यवेक्षणेष्वानन्देन महोत्सवे एकापि बहुधा विभक्तेवाभूत् । भूपतिरप्युपर्युपरि विसर्जितोष्ट्रवामीशतजनितजामातृपरितोषः सत्यप्रज्ञासम्पादनदक्षे सुखेक्षणपरे परिजने समं पुत्राभ्यां दुहितृस्नेहविक्लवः सर्वं स्वय-

मकरोत्। एवञ्च तस्मिन् विधुमयइवोत्प्रेक्ष्यमाणे काले लक्ष्मीमयइव विजृम्भमाणे महोत्सवे निदानइव सुखस्य फलइव जन्मनः परिणामइव पुण्यस्य यौवनइव भूतेर्नवराज्यइव प्रीतेः सिद्धिकालइव मनोरथस्य वर्तमाने काले गण्यमानइव मार्गध्वजैः प्रत्युद्गम्यमानइव मङ्गलवाद्यप्रतिशब्दकैराहूयमानइव मौहूर्त्तिकैराकृष्यमाणइव मनोरथैः परिष्वज्यमानइव बधूसखिहृदयैराजगाम विवाहदिवसः। प्रातरेव प्रतिहारैः समुत्सारितनिखिलारिवइलोकं विविक्ततरमक्रियत राजकुलम्।

अथ प्रतीहारः प्रविश्य नृपसमीपं देव! जामातुरन्तिकात् ताम्बूलदायकः पारिजातकनामायं प्राप्तइति अभिधाय साकारं युवानमदर्शयत्। राजा तु तं दूरादेव जामातृवल्लभतानाहूयितादरो भद्र! बालक! कच्चित् कुशली ग्रहवर्मेति पप्रच्छ। असौ तु सादरमाकर्णितनरपतिध्वनिर्धावमानः कानिचित्पदान्युपसृत्य प्रसार्य बाहू राजसेवाचतुरो वसुन्धरायान्निधाय मूर्धानमुत्थाय देव! कुशली यथाज्ञापयत्यस्य सूचयति देवनमस्कारेणेति व्यज्ञापयत्। आगमनमात्रनिवेदनामतश्च तं ज्ञात्वा कृतसत्कारं राजा यामिन्याः प्रथमे यामे विवाहः कालात्ययकृतो न यथाभवति दोषस्तथा विधीयतामिति सन्दिश्य प्रतिहारं प्राहिणोत्।

अथ सकलकमलवनलक्ष्मीवधूमुखइव सञ्चार्य समवसितेवासरे विवाहदिवसश्रियः पादपल्लवसंरज्यमाने सवितरि बधूवरानुरागलघुसतप्रेतलज्जान्विते ष्विवाघटमानचक्रवाकमिथुनेषु सौभाग्यध्वजइवोदयगिरिशिखरेण समुच्छ्रियतत्

माने वर्धमानधवलच्छाये ताराधिपमण्डले वधूवदनलावण्यज्योत्स्नातमसि प्रदोषे सवितरि उदितमपहसन्तीष्विव रजनीकरमुक्तानीतसुखीषु कुमुदिनीष्वाजगाम मुहुर्मुहुरुल्लासितस्फुरच्छायावारणचामरैर्मनोरथैरिवोत्थितरागाग्रपल्लवैः पुराधावमानैः पदातिवल्कर्णकटकहयहेषितदीयमानस्वागतैरिव वाजिनां हृन्दैरापूरितदिग्भागश्चलत्कर्णचामराणां चामीकरमयसर्वोपकरणानां वर्णकवलिनां घण्टाटङ्कारिणां घटाभिर्घटयन्निव पुनरिन्दूदयविलीयमानमन्धकारनतमालालङ्कृतमुखीं करिणीभिर्याकारइव पौरन्दरीलोकमुत्फुल्लमल्लिकामुण्डमालामध्यासितकुसुमशेखरेण शिरसा हसन्निव सपरिवेषचपाकरं कौमुदीप्रदोषमालरूपविनिर्जितमकरकेतुकरापहृतेन कार्मुकेणेव कौसुमेन दाम्ना विरचितवैकक्ष्यं विलासकुसुमगन्धसौरभभ्रमद्भृङ्गकुलकलप्रलापसुभगः पारिजातइव जातश्रिया सह पुनरवतारितो मेदिनीनववधूवदनालोककुतूहलाकृष्यमाणहृदयः पतन्निव सुखेन प्रत्यासन्ने लग्ने ग्रहवर्मा त्वरितमतरत्।

राजा तु तमुपद्वारमागतञ्चरणाभ्यामेव राजचक्रानुगम्यमानः ससुतः प्रत्युज्जगाम। अवतीर्णञ्च तं कृतनमस्कारं मन्दरमिव माधवः प्रसारितभुजो गाढमालिलिङ्ग यथाक्रमं परिष्वक्तराज्यवर्धनहर्षवर्धनञ्च तं हस्तेन गृहीत्वाभ्यन्तरन्निन्ये स्वनिर्विशेषेणासनदानादिना चैनमुपचारेणोपचचार। न चिराच्च गम्भीरनामा नृपतेः प्रणयी विद्वान् जामातरमुवाच तात! त्वां प्राप्य चिरात् खलु राज्यश्रिया घटितौ तेजोमयौ सकलजगद्गीयमानौ बुधकन्यानन्दकारिणौ सोमसूर्यवंशाविव पुष्पभूति-

सुखवंशौ प्रथममेव कौस्तुभमणिरिव हरेर्गुणैः स्थितोऽसि हृदये-
देवस्य इदानीन्तु शशिशिरसा परमेश्वरेणापि वोढव्यो जात-
इत्येवं वदत्येवं तस्मिन्नुपहृत्य मौहूर्तिका देवासीदिति लग्नवेला
व्रजतु जामाता कौतुकगृहमित्यूचुः।

अथ नरेन्द्रेणोत्तिष्ठ गच्छेति कथितो गृहवर्मा प्रवि-
श्याभ्यन्तरं जामातृदर्शनकुतूहलिनीनां स्त्रीणां पतितानि
लोचनसहस्राणि विकचनीलकुवलयवनानीव लङ्घयन्नाससाद
कौतुकगृहद्वारं। निवारित परिजनश्च प्रविवेश। अथ तु कतिप-
याप्तसखीस्वजनप्रमदाप्रायपरिवारामरुणांशुकावगुण्ठितमुखीं
प्रभातसन्ध्यामिव स्वप्रभया निष्प्रभान् दीपान् कुर्वाणामतिसौ-
कुमार्यशङ्कितेनेव यौवनेन नातिनिर्भरमुपगूढां साध्वसनिरु-
ध्यमानहृदयदेशदुःखमुक्तैर्निःश्वतायतैः श्वसितैरपयान्तं कुमा-
रिभावमिवानुशोचन्तीमुत्कम्पिनीं पतनभियेव निष्पन्दं ध्याय-
मानां हस्ततामरसप्रतिपच्चमासन्नग्रहणां शशिनमिव रोहिणी
मिव वेपमानमानसामालोकयन्तीं चन्दनधवलतनुज्योत्स्नाघन-
सञ्चितलावण्यात्कुमुदिनीगर्भादिव प्रसूतां कुसुमामोदनिर्हा-
रिणीं वसन्तहृदयादिव निर्गतान्निश्वासपरिमलाकृष्टमधु-
करां मलयमारुतादिवोत्पन्नां हतकन्दर्पानुमरणां रतिमिव
पुनर्जातां प्रभाविलासलावण्यसौरभमाधुर्यैः कौस्तुभमदि-
राशशिपारिजाताम्बतप्रभावैः सर्वगुणैरपरामिव सुरासुर-
वृधा रत्नाकरेण कल्पितां श्रियं स्निग्धेन मुक्ताफलवालि-
कालोकेन सितसिन्दुवारमञ्जरीभिरिव कल्पितकर्णपूराम्
कर्णाभरणमरकतप्रभाभरितशाद्वले कपोलतले विनोदयन्ती-
मिव हरिणीं लोचनच्छायामधोमुखीं वरालोकनकौतुकाकुल-

मुखोन्नमनप्रयत्नं सखीजनं हृदयेन भिर्भत्सयन्तीं वधू-
मपश्यत्।

प्रविशन्तमेव तं हृदयचौरं बद्ध्वा समर्पितश्चग्राह कन्दर्पः। परिहासस्मेरमुखीभिश्च नारीभिः कौतुकगृहे यद्यत्कार्यते जामाता तत्सर्वमतिपेशलश्चकार। कारितपरिणयनानुरूपवेषपरिग्रहश्च गृहीत्वा करेण वधूं निर्जगाम। जगाम च नवसुधाविमन्विताग ते तुषारशैलोपत्यकामिव त्र्यम्बकोऽम्बिकाविवाहाहूते भूभृद्भिः परिवृता केसरकुङ्कुमाराय यवाङ्कुरदन्तुरैः पञ्चास्यैः कलशैरनेकविचित्रैरन्तर्मुखैश्च मङ्गलहस्ताभिश्चाञ्जलिकारिकाभिरुत्सारितपर्यन्ता मुपाध्यायाधीयमानेन्धनधूमायमानाग्निसन्धुक्षणात्वरितां चणकोपहृष्टद्विजालुपक्रयानु विभिन्नितां शूपहृतहरितकुशां सन्निहितदृषदजिनाज्यसमित्फलिनि वङ्गावूतनसूर्पापितश्यामलशमीपलाशमिश्रजालहासिनीं वेदीमारुरोह च तां दिवसमिव सज्योत्स्नः शशी।

समुत्सर्पं च वेल्लितारुणशिखापल्लवश्चिखिनः कुसुमायुध इव रतिद्वितीयोरक्ताशोकस्य समीपम्। हुते च हुतभुजि प्रदक्षिणावर्तप्रवृत्ताभिर्वधूवदनालोकनकुतूहलिनीभिरिव ज्वालाभिरेव सह प्रदक्षिणं बभ्राम। पात्यमाने च लाजाञ्जलौ नखमयूखधवलितनुरदृष्टपूर्ववधूवरूपविस्मयस्मेरमिवाहस्यत विभावसुः। अत्रान्तरे स्वच्छकपोलोदरसंक्रान्तमनसः प्रतिबिम्बितमिव निर्वापयन्ती स्थूलमुक्ताफलमिव बाष्पोदबिन्दुसन्दोहदर्शितदुर्दिना निवेदनविकारं रुरोद वधूः। उदश्रु लोचनानाञ्च बन्धूनामुदपादि महानाक्रन्दः। परिसमापितवै-

वाहिकक्रियाकलापस्तु जामाता वध्वा समं प्रणनाम श्वशुरौ ।
प्रविवेश च द्वारपक्षलिखितरतिदैवतं प्रणयिभिरिव प्रथम-
प्रविष्टैरलिकुलैः कृतकोलाहलमलिकुलपक्षपवनप्रेङ्खोलितैश्च
कर्णोत्पलप्रहारभयकम्पितैरिव मङ्गलप्रदीपैः प्रकाशितमेक-
देशलिखितेन स्तबकितरक्ताशोकतरुतलभाजा सज्जचापेन तिर्य-
ग्भ्रुकुञ्चितनेत्रविभागेन शरमृजु कुर्वता कामदेवेनाधिष्ठित मे-
कपार्श्वन्यस्तेन काञ्चनाचमनकेनेतरपार्श्ववर्त्तिन्या दन्तशफरक-
धारिण्या कनकपुत्रिकया साक्षाल्लक्ष्मीरवोढपद्महस्तया सना-
थेन स्वास्तीर्णेन शयनीयेन शोभमानं शयनीयशिरोभागस्थि-
तेन कृतकुमुदशोभेन कुसुमायुधसाहाय्यागतेन शशिनेव निद्राक-
लशेन राजतेन राजमानं वासगृहम् । तत्र च नववधूकायाः
पराङ्मुखप्रसुप्तायाः मणिभित्तिदर्पणेषु मुखप्रतिबिम्बानि
प्रथमालापाकर्णकौतुकागतगृहदेवताननानीव मणिगवाक्षेषु
वीक्षमाणः क्षपादां निन्ये स्थित्वा च श्वशुरगृहे शीतलेन शी-
लेनामृतमयमिव श्वशुरहृदये वर्षन्नभिनवोपचारैरनुक्षणान-
न्दमयानि दश दिनानीव नीत्वा दत्त्वा च दौवारिकमिव राज-
कुले रणरणकं यौतकनिवेदितानीव हृदयानि सर्वलोकस्य
कथं कथमपि विसर्जितो नृपेण वध्वा सह स्वदेशमगमदिति ।

इति श्रीहर्षचरिते चक्रवर्त्तिजननन्नाम चतुर्थ उच्छ्वासः ।

---

## पञ्चमोच्छ्वासः।

---

नियतिर्विधाय पुंसां प्रथमं सुखमुपरि दारुणं दुःखम्।
कृत्वालोकं तरला तडिदिव वज्रं निपातयति॥
पातयति महापुरुषान् सममेव महाननादरेणैव।
परिवर्तमान एकः कालः शैलानिवानन्तः॥

अथ कदाचित् राज्यवर्द्धनं कवचधरमाहूय हूणान् हन्तुं हरिणानिव हरिणेशः किशोरमपरिमितबलानुयातं चिरन्तनैरमात्यैः प्रधानैश्च महासामन्तैः कृत्वा साभिसारमुत्तरापथं प्राहिणोत्। प्रयान्तं च देवोहर्षः कतिचित्प्रयाणकानि तुरङ्गमैरनुवव्राज प्रविष्टे च कैलासप्रभाभासिनीं ककुभं भ्रातरि निवर्तमाने नवे वयसि वर्तमानो विभ्रमरसानुरोधी केसरिशरभशार्दूलवराहबहुलेषु तुषारशैलोपकण्ठेषूत्कर्णीमानवनदेवताकटाक्षशारितशरीरकान्तिर्क्रीडन्मृगयया मृगलोचनः कतिपयान्यहानि बहिरेव व्यलम्बत। चकार चाकर्णाकृष्टभासुरभल्लवर्षी स्वल्पीयोभिरेव दिवसैर्निःश्वापदान्यरण्यानि।

एकदा तु विभातप्रायायां तुरीये यामे प्रत्युषस्येव स्वप्ने पटुलज्वालापुञ्जपिञ्जरितसकलककुभं दुर्निवारदावदहनभुजादह्यमानं केसरिणमद्राक्षीत्। तस्मिन्नेव दावदहने समुत्सृज्य शावकानुत्प्लुत्यात्मानं पातयन्तीं सिंहीमपश्यत्। आसीच्चास्य

चेतसि लोहेभ्यः कठिनतराः खलु स्नेहमया बन्धनपाशाः यदा- कृष्टास्तिर्यञ्चोऽप्येवमाचरन्तीति । प्रवृत्तस्यास्य दक्षिणेतरमक्षि पस्पन्दे । गात्रेष्वकस्मादेव च वेपथुर्विपप्रथे निर्निमित्तमन्तर्ब- न्धनस्खलाच्चचालेव हृदयं अकारणादेवाजायत गरीयसी दुः- खासिका किमिदमिति समुपनतविविधविकल्पविमथितमति- रपगतधृति श्चिन्तावनमितवदनस्तिमिततारकेण चक्षुषा समु- ल्लिख्यमानस्थलकमलिनीवनमिव चकार चकोरेक्षणः क्षणं क्षोणीम् । अह्नि च तस्मिन् शून्येनैव चेतसा चिक्रीड मृगयां आरोहति च हरितहये मध्यमम्भोभवनमागत्य उभयतो मन्दं मन्दं वाह्यमानतनुतालवृन्तः क्षितितलविततामतिशिशिर- मलयजरसलवलुलितवपुषमिन्दुधवलोपधानधारिणीं वेत्रपट्टि- कामधिशयानः साशङ्क एव तस्थौ ।

अथ दूरादेव लेखगर्भया नीलरागमेचकरुचा चेलचि- कया रचितमुण्डमालं श्रमातपाभ्यामारोप्यमाणकायकालि- मानमन्तर्गतेन शोकशिखिनाङ्गारतामिव नीयमानमभिद्रुतप- दोद्धूयमानधूलिराजिव्याजेन राजवार्त्ताश्रवणकुतूहलिन्या मे- दिन्येवानुगम्यमानमभिमुखपवनप्रेङ्खत्प्रविततोत्तरीयकर्पटप्रा- न्तवीज्यमानोभयपार्श्वमतित्वरया कृतपक्षमिवाशु परापतन्तं प्रेर्यमाणमिव पृष्ठतः स्वादेशेनाकृष्यमाणमिव पुरस्तादायतैः श्रमश्वासमोक्षैः स्विद्यल्ललाटघटमानप्रतिबिम्बमानकार्यगौरवा- दपह्नीयमाणलेखकमिव भास्वता सम्भ्रमात् भ्रष्टैरिवेन्द्रियैः शून्यकृतशरीरं लेखार्पितप्रयोजनगौरवदिवसमपि वर्त्मनि शू- न्यहृदयतया स्खलन्तमकालमेघशकलमिव पतिष्यतो दुर्वार्त्ता- वर्षस्य धूमपल्लवमिव ज्वलिष्यतः शोकज्वलनस्य बीजमिव

फलिष्यतो दुष्कृतपादपस्य निमित्तभूतं दीर्घाध्वगन्तारं कुरङ्गक-नामानमायान्तमद्राक्षीत् ।

दृष्ट्वा पूर्वनिमित्तपरम्पराविर्भूतभीतिः खिद्यत हृदयेन कुरङ्गकस्तु कृतप्रणामः समुपसृत्य प्रथममाननलग्नं विषाद-मुपनिन्ये पश्चाल्लेखं तञ्च हर्षः स्वयमेवावाचयत् लेखार्थेनैव च सह गृहीत्वा हृदयेन सन्तापमाविग्नरूपोऽभ्यधात् कुरङ्गक ! किं ममाद्य तातस्येति स च चक्षुषा बाष्पबिन्दुभिर्दुःखेन चाक्षरैः क्षरद्भिर्युगपदेवाचचक्षे देव ! दाहज्वरो महानिति तच्चाकर्ण्य सहसैवास्य हृदयं पपात हतमनाश्च जनयि-तुरायुष्कामोऽपरिमितमणिकनकरजतजातमात्मपरिबर्हमशेषं ब्राह्मणसादकरोत् । अभुक्तवानेवोच्चचाल दापितपानितः पर्याणमिति पुरःस्थितं शिराक्षपाणं बिभ्राणं वभाषा ब्रुवाणं त्वरया च धावमानः परिबर्हकोपनीतमारुह्य तुरङ्गमेकाक्येव प्रयातुं प्रावर्तत ।

अथाकाण्डप्रयाणाशङ्काक्षुभितस्तु सम्भ्रमात् एकीभूतमुख-खुररवभरितसकलभुवनविवरमागत्य सर्वाभ्यो दिग्भ्यो धाव-मानमश्वीयमढौकत । प्रस्थितस्यास्य दक्षिणेतरं प्रयान्तोऽनाथ-मुपस्थितं राजसिंहस्य हरिणाः प्रकटयां बभूवुः अशिशिर-रश्मिबिम्बाभिमुखस्य हृदयमवदारयन्निव शुष्के दारुणि रेफ-प्रायं ररास वायसः । कज्जलमय इव बहुदिवससमुचितबहल-मलपटलमलिनिततनुरभिमुखमाजगाम । शिखिपिच्छला-ञ्छनो दुर्निमित्तैरेभिरनभिनन्दमानगमनश्च नितरामायस्त-हृदयेन । पितृस्नेहाहितमहिम्ना च मनसा तत्तदुत्प्रेक्षमाण-कुरङ्गकस्कन्धव्यलग्नं चक्षुरविचलं दधानः समवसितसंक-

थ तूष्णीम्भूतेन भूपाललोकेनानुगम्यमानो बहुयोजनसम्मितमध्वानमेकेनैवाह्ना समलङ्घयत उपलब्धनरेन्द्रवार्त्ताविषस इव नष्टतेजस्यधोमुखीभवति भानुमति भण्डिमुखेन प्रणयिना राजपुत्रलोकेन बहुशो विज्ञाप्यमानोऽपि आहारमकरोत् पुरः प्रतिहारगृह्यमाणग्रामीणपरम्पराप्रकटितप्रगुणवर्त्मा च बहून्यवनिन्ये निशाम् ।

अन्यस्मिन्नहनि मध्यन्दिने विगतजनशब्दमस्तमिततूर्यनादमुपसंहृतगीतमुत्सारितोत्सवं प्रचरितचरणप्रसारितापणापण्यं स्थानेषु पवनचलत्कुटिकाभिः कोटिहोमधूमलेखाभिरुल्लसनीयं महिषविषाणकोटिभिरिवोल्लिख्यमानं कृतान्तपाशवागुराभिरिव वेष्ट्यमानमुपरिवालकालमहिषालङ्कारकालायसकिङ्किणीभिरिव कर्णं क्वणन्तीभिर्दिवं वायसमण्डलीभिर्भ्रमन्तीभिरावेद्यमानासन्नाशुभं क्वचित् प्रतिशायितस्निग्धबान्धवाराधमानाभिर्ब्रध्नं क्वचिद्दीपिकादहनकुलपुत्रप्रसाद्यमानमातृमण्डलं क्वचिन्मुण्डोपहारोद्यतदाडिमप्रार्थ्यमानामर्दकं क्वचिद्गन्धाघ्रीयमाणव्याघ्रोपयाच्यमानचण्डिकमन्यत्र शिरोविधृतविलीयमानगलद्गुग्गुलुविकलनवसेकानुमीयमानमहाकालमन्यत्र निशितनिस्त्रिंशनिकृत्तात्ममांसहोमप्रवृत्ताप्तवर्गमपरत्र प्रकाशनरपतिकुमारक्रियमाणमहामांसविक्रयक्रममुपहतमिव श्मशानभस्मभिरमङ्गलैरिव परिगृहीतं यातुधानैरिव विध्वस्तं कलिकालेनेव कवलितं पापपटलेनेवाच्छादितं धर्मविक्षेपैरिव लुण्ठितमनित्यताविकासैरिवाक्रान्तं नियतिविलसितैरिवात्मीकृतं शून्यमिव सुप्तमिव मूर्च्छितमिव च्छलितमिव मुषितमिव विद्धमिव च्युतमिव विलङ्घितमिव स्कन्धावारमाससार ।

प्रविशन्नेव विपणिवर्त्मनि कुतूहलाकुलबहुपालकपरिवारितमूर्द्ध यष्टिविष्टम्भितितते वामहस्तवर्तिनि भीषणमहिषाधिरूढप्रेतनाथसनाथे चित्रवति पटे परलोकव्यतिकरमितरकल्पितेन शरकाण्डेन कथयन्तं यमपटिकमद्राक्षीत्। तेनैव च गीयमानं श्लोकमशृणोत्।

मातापितृसहस्राणि पुत्रदारशतानि च।
युगे युगे व्यतीतानि कस्य ते कस्य वा भवान्॥

तेन चावदीर्यमाणहृदयः क्रमेण राजद्वारं प्रतिषिद्धसकललोकप्रवेशं ययौ। अवतीर्णश्चाभ्यन्तरात् निष्क्रामन्तं प्रसन्नमुखरागमुन्मुक्तमिवेन्द्रियैः सुषेणनामानं वैद्यकुमारमद्राक्षीत्। सुषेणोऽस्तु विशेषः क्रिन्तातस्येति सोऽवदत् नासीदानीं यदि भवेत् कुमारं दृष्ट्वेति ततो मन्दमन्दं द्वारपाललोकैः प्रणम्यमानश्च दीयमानसर्वस्वं पूज्यमानमूलदेवतं प्रारब्धामृतचरु क्रियाक्रियमाणषडाहुतीहोमानन्तरं पृषदाज्यलवलिप्तदलदूर्वापल्लवं पठ्यमानमहामायूरं प्रवर्तमानग्रहशान्तिकं निर्वर्त्यमानरक्षोबलिविधानं प्रयतविप्रप्रस्तुतसंहिताजपजप्यमानरुद्रैकादशीयशब्दायमानशिवगृहमतिशुचिशैवसम्पाद्यमानविरूपाक्षक्षीरकलशसहस्रस्नपनमचिरोपविष्टैरनासादितस्वामिदर्शनदूयमानमानसैरभ्यन्तरनिर्गतनिकटपरिजननिवेद्यमानवार्तैर्वर्तितस्नानाशनैरुज्ज्वलितालसंस्कारमलिनवेषैर्लिखितैरिव निश्चलैर्नरपतिभिर्नीयमाननक्तन्दिवदुःखदीनवदनेन च प्रघणेषु बद्धमण्डलेनोपांशु व्याहरता केनचित् चिकित्सकदोषानुद्घोषयता केनचिदसाध्यव्याधिलक्षणं पठता केनचिद् दुःस्वप्नानावेदयता केनचित् पिशाचवार्त्तां

विप्रलपता केनचित् कार्त्तान्तिकादेशान् प्रकाशयता केनचि-दुपलिङ्गानि गायताऽन्येनानित्यतां भावयता संसारं चाप-वदता कलिविलसितानि निन्दयता दैवं चोपालभमानेनान्येन धर्माय कुप्यताऽन्येन राजकुलदेवताश्चाधिक्षिपता परैश्च क्लिष्टकुलपुत्रभाग्यानि विगर्हयता बाह्यजनेन कथ्यमानकष्टपा-र्थिवस्थं राजकुलं विवेश ।

अविरलबाष्पजलपरिप्लुतलोचनेन पितृपरिजनेन वी-क्ष्यमाणो विविधौषधद्रव्यद्रवगर्भमुत्क्वथतां क्वाथानां सर्पि-षाञ्च पच्यमानानां गन्धमाजिघ्रत् । नवामृतोपमं कक्षान्तरं ततोऽतिनिविष्टग्रहावग्रहणीग्राहितबद्धवेत्रिणि तृणगुणित-तिरस्करणीतिरोहितसुवीथीपथे पिहितपक्षद्वारके परिहृत-कवाटरटिते घटितगवाक्षरक्षितमरुति अपचीयमानपरिचारके चरणताड़नरणत्सोपानप्रकुपितप्रतीहारनिभृतसम्भृतसंज्ञानि-र्दिश्यमानसकलकर्मणि नातिनिकटोपविष्टकुङ्कटिनि कोण-स्थिताम्लानाचमनकवाजिनि चन्द्रशालिकालीनमूकमौललोके महाधिविधुरबान्धववर्गगृहीतप्रच्छन्नप्रग्रीवके सञ्जवनपुञ्जितो-द्विग्नपरिजने प्रविष्टकतिपयप्रणयिनि गम्भीरज्वरारम्भभीत-भिषजि दुर्मनायमानमन्त्रिणि मन्दायमानपुरोधसि सीदत्-सुहृदि विद्राणविपश्चिति सन्तापितसामन्ते विचित्तचामर-ग्राहिणि दुःखक्षामशिरोरक्षिणि क्षीयमाणप्रसादे वीत-मनोरथसम्पदि स्वामिपरित्यक्ताहारक्षीयमाणबद्धविक्लववल्ल-भभूभृति क्षितितलपतितसकलजननीजागरूकराजपुत्रकेकु-लक्रमागतकुलपुत्रकनिवहोह्यमानशुचिशोकसङ्कुचितकञ्चुकिनि-

निरानन्दवन्दिनि श्वसच्छिराशासन्नसेवके विस्मृतताम्बूल-
धूसराधरवारयोषिति वैद्योपदिश्यमानपथ्याहारवाञ्छित-
पौरानुगवेऽनुजीविपीयमानोष्णचषकधारावारिविनोद्यमानमे-
षशेषहविषि राजाभिलाषभोज्यमानबकभुजि भिषजि सामग्री-
सम्पादनव्यग्रसमग्रगृह्यव्यवहारिणि मुहुर्मुहुराघ्रायमानतोया-
न्तिकानुमितघोरातुरतृषि तुषारपरिकल्पितकर्करीशिशिरीक्रि-
यमाणोदश्विति श्वेतार्द्रकार्पितकर्पूरपरागशीतलीकृतशलाके
स्नानचन्दनपङ्क्लिप्यमाननवभाण्डगतगण्डूषमस्तुनि तिर्यक्
कोमलकमलिनीपत्रप्रावृतमृणालिके सनालनीलोत्पलफलिनी-
मनाथसलिलपानभाजनभुवि वक्रधारानिपातनिर्वाप्यमाण-
क्वथिताम्भसि पटुपाटलशर्करामोदमुचि मक्षिकाश्रितश्रोतसि
कर्करीविश्रान्तातुरचक्षुषि सशैवालक्षपितगलद्गोलकयन्त्रके गृ-
हशालाजिरोल्लासितलाजसक्तुनि मासरपारीणपरिगृहीतकर्करे
शर्करे शिशिरौषधभरसचूर्णविकीर्णस्फुटितशुक्तिशङ्खसञ्चये
सञ्चितप्रचुरप्राचीनामलकमातुलुङ्गदाडिमद्राक्षादिफलैः प्रति-
शाङ्कितविप्रकीर्यमाणशान्त्युदकविप्रुषि प्रेष्यजनपिष्यमाण-
ललाटलेपोपादिग्धदृषदि धवलगृहे स्थितं परलोकविजयाय-
नीराज्यमानमिव ज्वलज्ज्वलनेनावरतपरिवर्तनैस्तरङ्गिणीशय-
नीये शेषमिव विषोष्मणा क्षीरोदन्वति विचेष्टमानं मुक्ताफल-
वालुकाधूलीधवलितं जलनिधिमिव चयकालेन कैलासमिव
दशाननोद्धियमाणमविरलचन्दनपातिनां परिचारकानां
अत्युष्णावयवसंस्पर्शभस्मीभूतोदरैरिव धवलैः करैः स्पृश्यमानं
लोकान्तरप्रस्थितं स्वासुना यशसेव चन्दनानुलेपनच्छलेनापृ-
च्छ्यमानमविच्छिन्नदीयमानकमलकुमुदेन्दीवरालङ्कारं काल-

कटाक्षपातशबलितमिव शरीरमुद्वहन्तन्निबद्धदुकूलपट्टपीड़ित-
केशान्तकथ्यमानकष्टवेदनानुबन्धमूर्धानं धारयन्तं दुर्द्धरवेद-
नोन्मीलच्छिराजालकरालेनाकालाङ्गुलिलिख्यमानलेखाख्यात-
मरणावधिदिवससंख्येनेव ललाटपट्टकेन भयमुपजनयन्त-
मासन्नयमदर्शनोद्वेगादिव किञ्चिदन्तःप्रविष्टतारकं चक्षु-
र्दधानं शुष्यद्दशनपङ्क्तिग्रस्तधूसरन्दीधितितरङ्गिणीं मृग-
तृष्णिकामिवोष्णनिश्वासपरम्परां दधानमुष्णनिश्वासदग्ध
एव श्यामायमानया रसनया निवेद्यमानदारुणसन्निपाता-
रम्भमुरःस्थलस्थापितमणिमौक्तिकचन्द्रकान्तं कृतान्तदर्शन-
योग्यमिवात्मानमलङ्कुर्वाणमङ्गभङ्गवलनोत्क्षिप्तभुजयुगपर्यस्तन-
खशिखैर्धारागृहमिव तापशान्तये रचयन्तन्नेदिष्ठसलिल-
मणिकुट्टिमोदरेषु निपतद्भिः प्रतिबिम्बकैरपि सन्तापातिशय-
मिव कथयन्तं स्पृशन्तीभिः प्रणयिणीभिरिव विभ्रमभूमिमूर्च्छ-
या बहुमन्यमानाद्धानाचरैरिव सभय मीषद्दृष्टैराविष्टं महा-
प्रस्थानकाले स्वसन्तापमाप्तहृदयेषु सञ्चारयन्तं रतिपतिस्प-
र्द्धीतमीर्ष्ययेव च्छायया मुच्यमानमुद्योगमिवोपद्रवाणां सर्पास्य-
मोक्षमिव क्षामतायाः हस्तेकृतं विहस्ततया विषयीकृतं वैषम्येण
पक्षीकृतं क्षयेण गोचरीकृतं ग्लान्या दृष्टं दुःखाधिना स्वीकृतं
व्याधिभिः क्रोड़ीकृतं कालेन कटाक्षीकृतं दक्षिणाशया पीड़ि-
तमिव पीडाभिर्जग्धमिव जागरेण गीर्णमिव वैवर्ण्येन ग्रासी-
कृतमिव गात्रभङ्गेन शीर्यमाणमिव विपद्भिः खण्ड्यमानमिव
वेदनाभिर्लुण्ठ्यमानमिव दुःखैरादिग्धं दैवेन निरूपितं
नियत्याघ्रातमनित्यत्वेनाभिभूयमानं भावेन परिकलितं परा-
सुतया दत्तावकाशं क्लेशेन समीपे वैमनस्यस्याङ्के इत्युच्छ्वासस्य

द्वारि दीर्घनिद्रायाः जिह्मायिते जीवितेशस्य वर्तमानं विरलं वाचि चलितश्चेतसि विह्वलं वपुषि क्षीणमायुषि प्रचुरं प्रलापसन्ततं श्वसितेजितं जृम्भिकाभिः पराधीनमाधिभिरनुबन्धमनुबन्धिकाभिः पार्श्वोपविष्टयाऽनवरतरोदनोच्छूनया म्लानीत चामरिकयापि निश्वासैरेव वीजयन्त्या विविधौषधिधूलीधूसरशरीरया मुहुर्मुहुरार्यपुत्र ! स्वपिषीति व्याहरन्त्या देव्या यशोवत्या शिरसि वक्षसि च स्पृश्यमानं पितरमद्राक्षीत् ।

दृष्ट्वा च प्रथमदुःखपातमथ्यमानमतिराशङ्कित इव भागधेयेभ्यः समभवत् अन्तकपरिवर्तिनमेव पितरममन्यत । निराकृत इवान्तःकरणेन क्षणमासीत् अवधूतश्च धैर्येण दीनीकृतः क्षोभेण तिरस्कृतो रत्या विषयीकृतो विषादेन पावकमयमिव हृदयमुद्वहन् विषदूषितानीव मुह्यन्तीन्द्रियाणि बिभ्राणस्तमसा रसातलमपि शोषयन् शून्यत्वेनाकाशमप्यतिशयानो नाविन्दत कर्तव्यं च हृदयेन भियमुत्तमाङ्गेन गां । अवनिपतिस्तु दूरादेव दयितं तनयं तदवस्थ एवापि निर्भरस्नेहावर्जितः प्रधावमानो मनसा प्रसार्य भुजावेह्येहीति आहूयैनं शरीरार्धेन शयनादुदगात् । संभ्रमोपगतश्चैनं विनयावनम्रमुन्नमय्य बलादुरसि निवेश्य प्रविशन्निव प्रेम्णा निशाकरमण्डलमध्ये मज्जन्निव महामृतमये सरसि स्नान्निव हरिचन्दनप्रस्रवणे लिप्यमान इव तुषाराद्रिद्रवेण पीडयन्नङ्गैरङ्गानि कपोलेन कपोलं बाधयत् मीलयत्पक्ष्माग्रग्रथिते [illegible] बाष्पस्राविणी लोचने विस्मृतसंज्वरः सुचिरमालिलिङ्ग ।

अथ कथमपि चिराद्विमुक्तमुपसृत्य पुनः पुनः कृतनमस्कारः प्रणतजननीकमुपागत्यासीनश्च शयनान्तिके पित-

न्निव विगतनिमेषेण निश्चलेन चक्षुषा व्यलोकयत् आमम्रर्षं च पुनः पुनर्वेपथुमता करतलेन तयच्चामकरस्य कृष्णादिवाऽवादीत् वत्स! कृशोऽसीति भणितश्चाकथयत् देव! तृतीयमहः कृताहारस्यादेश इति तच्छ्रुत्वा राजा वाष्पवेगम्रच्छ्यमाणाक्षरं कथं कथमप्यायतनिश्वस्योवाच वत्स! जानामि त्वां पितृप्रियमिति स्वयुहृदयं ईदृशेषु विधुरयति च धीमतो धीमतिनिर्भरो वान्धवस्नेहः सर्वप्रमाथी यतो नार्हस्यति मातमात्मानं शुचे दातुं उद्दामदाहज्वरदग्धोऽपि दह्ये खल्वधिकमायुष्मदाधिना निशितनिस्त्रिंशशाणितइव तनोतु मां त्वदीयस्तनिमा सुखञ्च राज्यञ्च वंशश्च प्राणाश्च त्वयि मे स्थिताः यथा मम तथा सर्वासां प्रजानां तद्विधानां पीड़ाः पीड़यन्ति सकलमिव भुवनतलं नत्वापुण्यभाजां वंशमलङ्कुर्वन्ति भवादृशाः फलमस्यानेकजन्मान्तरोपार्जितस्याकलुषस्य कर्मणः करतलगतमिव कथयन्ति चतुर्णामप्यर्णवानामाधिपत्यन्ते लक्षणानि त्वज्जन्मनैव कृतार्थोऽस्मि निरभिलाषोऽस्मि जीवितव्ये भिषगनुरोधस्तूपाययति मामौषधम्।

अपि च सर्वप्रजापुण्यैः सकलभुवनपरिपालनार्थमुत्पद्यमानानां भवादृशो जन्मग्रहणोपायः पितरौ प्रजाभिस्तु बन्धुमन्तो राजानः न ज्ञातिभ्यस्तदुत्तिष्ठ कुरुष्व पुरेव सर्वाः क्रियाः कृताहारे त्वय्यहमपि सुखमुपभोक्ष्ये पथ्यं इत्येवमभिहितस्यास्य दिधक्षन्निव हृदयमतितरां शोकानलः। सन्दुधुक्षे क्षणमात्रञ्च स्थित्वा पिता पुनराहारार्थमादिश्यमानो धवलगृहादवततार चकार च चेतसि अकाण्डे खल्वयं समुपस्थितो महाप्रलयः अभ्रे वज्रपातः सामान्योऽपि

तावच्छोकसोच्छ्वासं मरणं अनुपदिष्टौषधो महाव्याधिः अभस्मीकरणोऽग्निप्रवेशः अनुपरतस्यैव नरकवासः निर्ज्योतिरङ्गारवर्षः अशकलीकरणं क्रकचपाटनं अव्रणो वज्रसूचिभेदः किमुत विशेषाश्रितः किमत्र करवाणीति राजपुरुषाधिष्ठितश्च गत्वा सधूममयानिव कृताश्रुपातानग्निमयानिव अनिशहृदयतापान्विषमयानिव दत्तमूर्च्छावेगान्महापातकमयानिवोपपादितदुःखान् क्षारमयानिव क्षतवेदनान् कतिचित्कवलानगृह्णात्। आचामं चामरग्राहिणीमादिश्य विज्ञायागच्छ कथमास्ते तात इति गत्वा प्रतिनिवृत्य देव! तथैवेति कथिते तया अगृहीतताम्बूल एव गत्वोत्ताम्यता अस्ताभिलाषिणि सवितरि सर्वानाहूय वैद्यान् किमस्मिन्नेवंविधे व्याधौ विधेयमधुनेति विषण्णहृदयः पप्रच्छ। ते तु व्यज्ञापयन् देव! धैर्यमवलम्बस्व कतिपयैरेव दिवसैः पुनः स्वां प्रकृतिमापन्नं स्वस्थं श्रोष्यसि पितरमिति तेषाञ्च पौनर्वसवो युवाष्टादशवर्षदेशीयस्तस्मिन्नेव राजकुले कुलक्रमागतः पारदृश्वा आयुर्वेदस्य भूभुजा स्वसूनुनिर्विशेषं लालितं प्रकृत्यैवातिपटीयस्या प्रज्ञया यथा विज्ञाता व्याधिस्वरूपाणां रसायननामा वैद्यकुमारः साश्रुस्तूष्णीमधोमुखोऽभूत्।

पृष्टश्च राजसूनुना सखे! रसायन! कथय तथ्यं यद्यसाध्यमिव पश्यसीति असावब्रवीत् देव! श्वः प्रभाते यथावस्थितमावेदयितास्मीति तत्रैव चान्तरे भुवनकमलिनीपालः कोकमाश्वासयन्नपरवक्त्रमुच्चैरगायत्।

विहग! कुरु दृढं मनः स्वयं त्यज शुचमास्व विवेकवर्त्मनि।
सह सकलसरोजिनीश्रिया श्रयति सुमेरुशिरो विरोचनः॥

तच्चाकर्ण्यवादीन्निमित्तज्ञः पितरि जीविताशां सुतरां शिथिलीचकार गतेषु भिषक्षु चतुष्पतिः चपासुखे क्षितिपाल-समीपमेव पुनरारुरोह गृहं धवलं तत्र च दाहो महान् प्राहर हारं हरिणिके! मणिदर्पणं देहि देवि! हिमलवैर्लिम्प ललाटं लीलावति! घनसारधूलिन्निधेहि वक्षसि निक्षिप चक्षुषि चन्द्रकान्तं कान्तिमति! कलय कुवलयं कपोले कलावति! चन्दनचर्चामारचय चारुमति! पातय पटीरमारुतं मधुकरि! मन्दय दाहमरविन्दैरिन्दुमति! जनय जलार्द्रया मुदं मदिरावति! समुपनय मृणालानि मलयवति! तरलय तालवृन्तमन्तिके अवन्तिमति! मूर्धानं बधान बन्धुमति! कन्धरान्धारय धारिणि! उरसि शीकरं कुरङ्गाक्षि! समाहय बाहुं बलाहिके! पीड़य पादौ पद्मावति! गृहाण गाढमङ्गमनङ्गसेने! का वेला विलासवति! नैति निद्रा कथं कथय कुमुद्वति! इत्येवं प्रियान् पितुरालापानविरतमाकर्णयन्दूयमानहृदयः दुःखदीर्घोच्छ्वासादेव निशामनैषीत् ।

उषसि चावतीर्य राजद्वारदेशोपसर्पिणा परिवर्धकेनोपस्थापिते पितुरन्तिके चरणाभ्यामेव स्वमन्दिरं जगाम । तत्र च त्वरमाणो भ्रातुरागमनार्थमुपर्युपरि क्षिप्रवादिनोदीर्णाध्वगान् प्रजविनश्चोष्ट्रपालान् प्राहिणोत् । प्रक्षालितमुखश्च परिजनोपनीतमपि प्रतिकर्म नाग्रहीत: अग्रत: स्थितानां राजपुत्राणां विमनसां रसायनो रसायन इति जल्पितमव्यक्तमश्रौषीत् । अपृच्छच्च भद्र! किं रसायनेनेति पृष्टाश्च ते सर्वे सममेव तूष्णीम्बभूवुः भूयोभूयश्चावध्यमाना दुःखेन कथं कथ-

मप्याचचक्षिरे देव! पावकं प्रविष्ट इति तच्छ्रुत्वा भ्रष्टइवा-न्तःकरणे तापेन सद्यो विवर्णतामगात् उत्पाद्यमानमिव न शशाक सशोकं पारयितुं हृदयं, आसीच्चास्य चेतसि कामं स्वयं न वदति न तु आवयत्यप्रियवचनमरतिकरमितरइवा-भिजातो जनः कृच्छ्रेऽपि यथानेनाधिष्ठितं उज्ज्वलीकृतमधिकतरं ज्वलनप्रवेशेन कल्याणप्रकृति कार्तस्वरमिव कौलपुत्रमस्येति पुनश्चाचिन्तयत् ।

समुचितमेवाथवा स्नेहस्येदं किमस्य तातो न तातः किं वाम्बा न जननी वयं वा न भ्रातरः अस्मिन्नपि तावत् स्वा-मिनि दुर्लभीभवत्यसावं.ह्रीयमाणा ह्रीहेतवो लोके किमु-ताद्भुतमयेन जीवनान्निर्व्याजबान्धवे बन्ध्यप्रसादे सुस्टष्टी-तनाम्नि ताते मां प्रत्यसाम्प्रतमाचरितं आत्मानन्दहेतुनानेन किं वास्य कल्पमवस्थितस्य श्रेयसो यशोमयस्य दह्याने देहस्य पतितः स केवलं दहनेन दग्धास्तु वयं धन्यः खल्वसावग्रणीः पुण्यभाजां पुण्यमिदमेव राजकुलं कुलपुत्रेण यत्तादृशा वियुक्तं अपि च खल्वपि ममैतेषां प्राणानां कः कार्यातिभारः कृत्य-शेषो वा नाद्यापि येनातिनिष्ठुराः प्राणाः प्रतितिष्ठन्ते को वान्तरायो हृदयस्य येन सहस्रधा दलयतीति दुःखार्तश्च न जगामैव राजसङ्गं समुत्सृज्य च सर्वकार्याणि शयनीये निप-त्योत्तरवाससोत्तमाङ्गमवगुण्ठ्यातिष्ठत् ।

इत्थं भूते च देवे हर्षे राजनि च तदवस्थे सर्वस्यैव लो-कस्य कपोलेषु कीलिताइव कराः लोचनेषु लेप्यमय्य इवा-श्रुस्रुतयः नासाग्रेषु ग्रथिताइव दृष्टयः कण्ठेषूत्कीर्णाइव

रुदितध्वनयः जिह्वासु सञ्जातानीव हा कष्टानि लपनेषु पल्लवितानीव श्वसितानि अधरेषु लिखितानीव परिदेवनपदानि हृदयेषु निधानीकृतानीव दुःखान्यभूवन् । उच्छ्वासाशङ्काभीतेव नालभत नेत्रोदराणि निद्रा निश्वासवातविलुलिता इवास्येषु व्यलीयन्त हासाः अनवशेषदग्धेव सन्तापेनावतवाणीकथास्वपि नाश्रूयन्त परिहासाः क्वागमन्निति नाध्यायन्त गीतगोष्ठ्यः जन्मान्तरनीतानीव नास्मर्यन्त लास्यानि स्वप्नेऽपि नादृश्यन्त प्रसाधनानि वार्तापि नोपालभ्यतोपभोगानां नामापि नाकीर्त्यत हासस्य खपुष्पप्रतिमान्यासन्नापानमण्डलानि लोकान्तरमिवालीयन्त वन्दिना च युगान्तरमिवाकीर्त्यन्त निर्वृत्तयः पुनरिवादह्यत शोकाग्निना मकरकेतुः दिवापि नामुच्यन्त शयनीयानि शनैः शनैश्च महापुरुषविनिपातपिशुना समं समुद्भवन् भुवने भूयांसो भूपतेरभावाय भयमुद्भावयन्तो भूतानां महोत्पाताः ।

तथाहि दोलायमानकुलाचलचक्रवाला यशोवत्या सार्द्धमागन्तुकामेव प्रथममचलयत् भूतधात्री महान्तरे इवान्तरेऽस्मिन् स्फुरन्तः परस्परास्फालनवाचालवीचयो विजृम्भुरर्णवा भूभृद्भावभीतानां स्त्रियां विततशिखाकलापकुटिलाः केशकलापा इवोर्द्धीबभूवुर्धूमकेतवः धूमकेतुकलितदिङ्मुखन्दिक्पालारब्धायुष्कामहोमधूमश्याममिवाऽभवत् भ्रष्टभासि तप्तकालायसकुम्भबभ्रुणि भानुमण्डले भयङ्करं कबन्धकार्यं कोऽपि पार्थिवः प्राणार्थी पुरुषोपहारमिवोपजहार ज्वलितपृथुपरिवेषमण्डलाभोगभासुरो जिह्वाजृम्भमाणस्वर्भा-

नुभयैरुपरिरचिताग्निराङ्गार इव प्रादृश्यत श्वेतभानुः । अवनिप-
तिसंतापसंसाधिताः प्रथमतरकृतपावकप्रवेशा इवादृश्यन्तानु-
रक्ता दिशः स्नुतशोणितासारारुणिततनुरनुमरणाय प्राप्त-
तरक्तांशुकपटेवादृश्यत वसुधावधूः नराधिपविनाशसंभ्रमभी-
तैर्लोकपालैरिव कालायसकवाटसंपुटैरकालमेघपटलैरघ-
ट्यन्त दिग्द्वाराणि प्रेतपतिप्रयाणप्रहताः पटवः पटहा
इवारटन्तो हृदयस्फोटकाः परुषाविरे निपततां निर्घातानां
घोराग्निघोषाः निकटीभवद्यममहिषखुरपुटोद्धूयमाना इव
द्युमणिच्छायामधूसरी च कुटिलक्रमेलककपिलाः पांसुवृष्टयो विर-
सविराविणीनामुलूकीनां राशिरिवोज्ज्वालाभिः प्रती-
च्छन्त्य इव पतन्त्युल्का नभसो वभासिरे शिवानां श्रेणयः ।

राजग्रामनिर्धूयमानकबरीविभागविभावितविकाराः प्रकीर्ण-
केशपाशप्रकाशितशोका इव प्रकाशान्तप्रतिमाः कुलदेवता-
नामुपरिसिंहासनमाकुलकालरात्रिसूयमानव्रजिनवेणीबन्धविभ्र-
ममुद्बभ्राम मधुपमण्डलं अटतामन्तःपुरस्योपरि क्षणमपि
न शशाम व्याक्रोशी वायसानां श्वेतातपत्रखण्डनमध्या-
ज्जीवितमिव राज्यस्य पिशितपिण्डलोहितमुग्रचञ्चुरुच्चखान
माणिक्यशवखण्डं कूजज्जरद्गृध्रः । हर्षोऽपि महोत्पातधूयमान-
मानसस्तथैव निनाय निशाम् । अन्यस्मिन्नहनि समीपस्य रा-
जकुलादागतागतिवशविशीर्यमाणालङ्कारझङ्कारझङ्कारिणी-
विजयघोषेणेव विषादस्याकुलचरणवलत्तुलाकोटिक्वणितवा-
चालिताभिरुद्ग्रीवाभिः किं किमिति पृच्छमानेव पवनहंसीभिः
स्खलितविशालश्रोणीगुरुज्ञानानुरागिणीभिर्बाष्पाम्भसोपदिश्य-

मानमार्गेव उद्दामारसी भरदृष्टकवाटपट्टास्फोटितस्फुटललाट-रुधिरपटलेन प्रान्तेनैव रक्तांशुकस्य मुखमाच्छाद्य प्रवृ-त्तती सन्तापवशविलीनवलयकनकरसधारामिव वेत्रलता-मुत्सृजन्ती मुखमरुत्तरङ्गितामुत्तरीयांशुकपटीं स्फुरन्तीं फणिनीमिव निर्मोकमञ्जरीमाकर्षन्ती नखांसस्रंसिना विलो-लनीलतमेन तमालवनपल्लवचीरचीवरेणेव शोकोपचितेन शिरोरुहसञ्चयेन चञ्चता प्राहतकुचाकुचताडनपीड़या समु-च्छूना ताम्रश्यामतलं मुहुर्मुहुरत्युष्णाश्रुप्रमार्जनदग्धमिव कर-किसलयं धुनाना चक्षुर्निर्झरे शिथ्यती स्तनपयस्तव शोकाग्नि-प्रवेशाय स्वकपोले प्रतिबिम्बितमासन्नलोकं लोललोचन-प्रवृत्तैस्तरलैस्तारकांशुभिः श्यामायमानमात्मदुःखेन दिवस-मपि दहन्तीव क्व कुमारः कुमार इति प्रतिपुरुषं पृच्छन्ती विकलेतिनाम्ना यशोवत्या प्रतिहारी जगाम।

विषण्णा लोकलोचनप्रत्युद्गता चोपसृत्य कुट्टिमन्यस्तहस्तयुगला गलन्तीभिः सञ्चयन्तीव शुष्यद्दशनदीधितिधाराधूसरमधरमधो-मुखी विज्ञापितवती देवि! परित्रायस्व परित्रायस्व जीवत्येव भर्तरि किमपि व्यवसितं देव्येति। ततश्च तदपरमाकर्ण्य स्रुत इव सत्वेन दग्ध इव दुःखेनाचान्त इव चिन्तयाकुलित इव तापे-नाङ्गीकृत इवातङ्केनाप्रतिपत्तिरासीत्। आसीच्चास्य चेतसि प्रतिपन्नसंज्ञस्य बहुशो हृदये दुःखाभिषङ्गो निपतन्नश्मनीव लोहप्रहारः कठिने हुतभुजमुत्थापयति न तु भस्मसात्करोति मे निरनुक्रोशस्य कायं इत्युत्थाय त्वरमाणोऽन्तःपुरमगात्।

तत्र च भर्तुमुद्यतानां राजमहिषीणामशृणोत् परिदेवनवच-

मानि मर्तिनिष्ठुराणि दूरादेव तात! द्रुतं चिन्तयात्मानं प्रवसति ते जननी जातिगुच्छाद्यापृच्छस्व मां मया विनाद्यैवानाथासि भगिनि! भवनदाडिमलते! रक्ताशोकमर्षणीयाः पादप्रहाराः कर्णपूरपल्लवभङ्गापराधांश्च पुत्रकान्तःपुरबालबकुलत्राव णीग- ण्डूषग्रहदुर्ललितो दृष्टोऽसि वत्से प्रियङ्गुलतिके! गाढमालिङ्ग मान्दुर्लभास्मिमागलग्नं कस्य समर्पयामि गृहमयूरकं अम्ब! सुतवल्लालनीयमिदं हंसमिथुनं मन्दपुण्यया न सम्भावितोऽस्य चक्रवाकयुगलस्य विवाहोत्सवः मातृवत्सले! निवर्तस्व गृहं हरिणिके! समुपनय सौविदल्लकवल्लभवल्लकीं परिष्वजे तावदेनां चन्द्रसेने! दृष्टः क्रियतामयञ्जनः इन्दुमति! वन्दनीया ते सखी बन्धुमति! चेटि! मुञ्च चरणौ आर्ये! कात्यायनिके! किं रोदिषि नीतास्मि दैवेन तात! कञ्चु- किन्! किं मां लवणां प्रदक्षिणीकरोषि धात्रेयि! धार- यात्मानं किं पादयोः पतसि नलिके! गृहाण मां पश्चिमां कण्ठे कष्टं न दृष्टा प्रियसखी मलयवती तरङ्गवति! अयमाम- न्त्रणाञ्जलिः मानुमत्ययमन्त्यः प्रणामः कुवलयवत्येष ते- ऽवसानपरिष्वङ्गः सख्यः! क्षन्तव्याः प्रणयकलहाः इत्येवं प्राया- नालापान्।

दह्यमानश्रवणाश्च तैः प्रविशन्नेव दत्तसर्वस्वा पते राम गृहीतमात्रप्रसाधनां जानकीमिव जातवेदसम्पत्युः प्रवेक्षन्तीं प्रत्यग्रस्नानार्द्रदेहतया भुवमिव स्नपयन्तीं सद्यः समुद्रादु- त्थितां कुसुम्भवभ्रुणी वाससी दिवमिव तेजसि साध्ये दधाना- न्ताम्बूलजग्धिजनितरागाकारमधरप्रभापाटलं पाटलपट्टक-

त्सुकामिवाविधवा मरणचिह्नमङ्गलागमुद्वहन्तीं रक्तकण्ठ-सूत्रेण कुचान्तरालावलम्बिना स्फुटितहृदयविगलितरुधिर-धाराशङ्कामनुकुर्वन्तीं कुटिलकुण्डलकोटिकण्टकाकृष्टतन्तुना महारणत्वलितेन सितांशुपाशेनेव कण्ठमुत्पीडयन्तीं सरस-कुङ्कुमाङ्गरागतया कवलितामिव दिधक्षताशुशुक्षणिनान-लार्च्चनाकुसुमैरिव धवलधवलैरश्रुबिन्दुभिरंशुकोत्सङ्गमापूर-यन्तीं गृहदेवतामन्त्रणबलिमिव वलयैर्विगलद्भिः पदे पदे विकिरन्तीमाशपदीनां कण्ठे गुणकुसुममालां यमदोला-मिवाधिरूढामन्तःकूजन्मधुकरमुखरेणामन्त्र्यमाणलोचनोत्प-लामिव लवङ्गकर्णोत्पलेन प्रदक्षिणीक्रियमाणामिव मणि-नूपुरबन्धुभिर्बद्धमण्डलं भ्रमद्भिर्भवनकलहंसैः सन्निहितप्राण-संमरणाय चित्रमिव चित्रफलकमारयन्तीमाबद्धोद्धूयमान-धवलपुष्पदामकां पतिव्रतापताकामिव पतिप्रासयष्टिमिष्टा-मुपगूहमानां बन्धोरिव निजचारित्रधवलस्यातपत्रस्य धुरोर्मितोदकमुत्सृजन्तीं पत्युः पादपतनोद्गमदभ्यधिकबाष्पा-म्भः प्रवाहप्रतिपन्नान् सचिवान् सन्दिशन्ती मनुनयनिवर्तित-विधुरदृष्टबन्धुवर्गबध्यमानध्वनिभिर्गृहाक्रन्दैराकृष्यमाणश्रवणां भर्तृभाषितनिभैः पञ्जरसिंहहुंहितैर्ह्रीयमाणहृदयां धात्र्या भर्तृभक्त्या च निजया च प्रस्थितां मूर्च्छया जरत्या च संस्कृतया धार्यमाणां सख्या पीडया च व्यसनसंस्कृतया समालिङ्गितां परिजनेन सन्तापेन च गृहीतसर्व्वावयवेन परीतां कुल-पुत्त्रैश्च महत्तरैरधिष्ठितां कञ्चुकिभिर्दुःखैश्चातिवृद्धैरनुगम्य-मानां भूपालवल्लभान् कालेयकानपि साश्रमालोकयन्तीं सपत्नी-

नामपि पादयोः पतन्तीं चित्रपुत्रिकामप्यामन्त्रमाणां गृह-पतत्रिणामपि पुरस्तादञ्जलिमुपरचयन्तीं पशूनप्यापृच्छमानां भवनपादपानां परिष्वजमानां मातरं ददर्श ।

दूरादेव बाष्पायमाणदृष्टिरभ्यधात् अम्ब ! त्वमपि मां मन्दपुण्यं परित्यजसि प्रसीद निवर्तस्व इत्यभिदधान इव च सस्नेहमिव नूपुरमणिमरीचिभिश्चुम्ब्यमानचूडश्चरणयोर्न्यपतत् । देवी तु यशोवती तथा तिष्ठति पादनिहितशिरसि कनीयसि तनये गुरुणा गिरिणेवोद्वेगवेगेनावष्टभ्यमाना मूर्च्छान्धतमसं रसातलमिव प्रविशन्ती प्रवाहेणेव चिरनिरोधेन संपिण्डितेन स्नेहसम्भारेण निर्भरमाविर्भूतेनाभिभूयमाना कृतप्रयत्नापि धारयितुमशक्ता बाष्पोत्पीडं उत्कटकुचोत्कम्पप्रकटितासह्यशोकाकुलता च गद्गदिकागृह्यमाणगलविकला सामान्यमन्युतरलीक्रियमाणा धारोद्वेशपुनरुक्तस्फुरणनिपीडितनासापुटा निमील्य नयने नयनाम्भसामेकप्लवेनाप्लावयन्ती सकलौ कपोलौ सञ्छाद्य नखमयूखमालाखचितदशान्तेन तनुना तन्वन्तरविनिर्गच्छदच्छांशुस्रोतसेवांशुकपटान्तेन किञ्चिदुत्तानितं वदनेन्दुं दूयमानमनसा स्मरन्ती प्रस्नुतस्तनी प्रसवदिनादारभ्य सकलमङ्गलमङ्क्षशायि शैशवमस्य ज्ञातिगृहगतहृदया चाम्ब ! तात ! न पश्यसि मां परलोकप्रस्थितामेव मतिदुःखितामिति मुहुर्मुहुराक्रन्दन्ती पितरौ हा वत्स ! विश्रान्तभागधेयाय न दृष्टोऽसीति ज्येष्ठं प्रेष्ठं सन्निहितमधिक्रोशन्ती हा वत्से ! अनाथा जातेति श्वशुरकुलवर्तिनीं दुहितर-

मनुशोचन्ती निष्करुणा! किमपराद्धं तवामुना जनेनेति दैवमु-
पलभमाना नास्ति मत्समा सीमन्तिनी मन्दभागिनीति नि-
न्दन्ती बहुविधमात्मानं मुषितास्मि नृशंस! त्वयेति अकाण्डे
कृतान्तं गर्हमाणा मुक्तकण्ठी अतिचिरं प्राकृतप्रमदेव प्रारो-
दीत्।

प्रशान्ते च मन्युवेगे सस्नेहमुत्थापयामास सुतं हस्तेन
चास्य प्रस्रुतस्य पक्ष्मपालिपुञ्जमाननखकिरणनिवहाहृतामि-
वाधिकतरं क्षरन्तीं दृष्टिं ममार्ज स्वयमपि कठोररागपरि-
पीड्यमानेनेव धवलिम्ना मुच्यमानोदरे शरदभ्रूणि श्लथत्-
पर्यन्ते शुक्लीकृततारकितपक्ष्मणि सूक्ष्मतराश्रुबिन्दुपरि-
पाटिपतनानुबन्धविधुरे लोचने पुनः पुन रापूर्यमाणे प्रसज्य-
बाष्पार्द्रगण्डगृहीतस्य श्रवणशिखरमारोप्य शोकलम्बामल-
कलताबद्धस्रस्तविलोलव्यालीव्याकुलिताश्च सतिरश्चीं चिकुर-
सटामश्रुप्रवाहप्रेरितमार्द्रश्च किञ्चिच्च्युतमुत्क्षिप्य हस्तेन
स्तनोत्तरीयं तरङ्गितमितरनखांशुपटलेन मग्नांशुकपटान्त-
तनुतनुताम्रलेखालाञ्छितलावण्यकुब्जिकावर्जितराजहंसास्य-
भृङ्गारकोद्गीर्णेनाम्भसा प्रक्षाल्य वदनकमलं कलमूककरधृते
धौतधवलेन वासः सकले शुचिनि संमृज्य पाणिं सुतवदन-
विनिहितनिश्चलनयनयुगला चिरं स्थित्वा पुनः पुनरायतम्
निश्वस्योवाच वत्स! नास्ति प्रियो निर्गुणो वा परित्यागा-
र्हो वा स्तन्येनैव सह त्वया पीतं मे हृदयम्।

अस्मिंस्तु समये भूतप्रभुप्रसादान्तरितां त्वान्न पश्यति
मे दृष्टिः। अपि च पुत्रक पुरुषान्तरलोकनव्यसनिनी राज्योप-

करुणकृपणा नाहमस्मि लक्ष्मीसमा वा कुलपुत्रकलत्रमस्मिन् चारित्रधनाधर्मधवले कुले जाता जातक विस्मृतोऽसि मां स्मर- यतशौण्डस्य पुरुषप्रकाण्डस्य केसरिणमिव केसरिणीं गृहिणीं वीरजायां वीरजननञ्च मादृशी पराक्रमक्रीता कथमन्यथा कु- र्य्यात् एवंविधेन पित्रा ते भरतभागीरथेनाभागनिभेन नरेन्द्र- वृन्दारकेण गृहीतः पाणिः आसेवितसेवासम्भ्रान्तानन्त- राम्भः सीमन्तिनीसमावर्जितजाम्बूनदघनाभिषेकः शिरसा लक्ष्मीमनोरथदुर्लभो महादेवीपट्टबन्धसत्कारलाभो ललाटेनि- पीतौ युष्मद्विधैरपत्यैरमितकलत्रबन्दिवृन्दविधूयमानचामर- मरुच्चलच्चीनांशुकधरौ पयोधरौ सपत्नीशिरःसु निहित नि- खिलकटककुटुम्बिनीकिरीटमाणिक्यमालाञ्चितचरणयुगलं एवं कृतार्थसर्व्वावयवा किमपरमपेक्षते क्षीणपुण्या मर्तुमविध- वैव वाञ्छामि न शक्नोमि दग्धेति भर्तृयसुभीरहितारतिरिव निरर्थकान् प्रलापान् कर्त्तुं पितुश्च पादधूलिरिव ते प्रथम- ङ्गता गमनमावेदयन्ती बहुमता भविष्यामि शूरानुरागि- णीनां सुराङ्गनानां प्रत्यक्षदृष्टदारुणदुःखदग्धतायाश्च मे किं धक्ष्यति धूमध्वजः। मरणात्तु जीवितमेवास्मिन् समये साहसं अतिशीतलः पतिविरहशोकादक्षयस्नेहेन्धनादग्नादनलः कै- लासकल्पे प्रवसति जीवितेश्वरे अरत्तृणकणिकणीयसि जी- विते लोभ इति क्व घटते।

अपि च जीवन्तीं मामपि प्रतिपन्नपतिमरणावधीरण- महापातकिनीं न स्पृक्ष्यन्ति पुत्रराज्यसुखानि। दुःखदग्धानाञ्च हृदि अमङ्गला चाप्रशस्ता च निरुपयोगा च भवति वत्स!

स्थास्नुना यशसा स्थातुमिच्छामि लोकेन वपुषा तदहमेव त्वां तात! प्रसादयामि न मनोरथप्रातिकूल्येन कदर्थनीयास्मि इत्युक्त्वा पादयोरपतत्। स तु ससम्भ्रममपनीय चरणयुगल-मवनमिततनु रुभयकरधृतवपुषमवनिगतशिरसमुन्नमय्य मा-तरं दुर्निवारिताश्च शुचः संवाधय्य कुलयोषिताञ्च श्रेयसीं तामेव मन्यमानः क्रियां कृतनिश्चयाञ्च ज्ञात्वा तूष्णीमधोमु-खोऽभूत्।

अभिनन्दति स्नेहकातरापि कुलीनता देशकालानुरूपं देव्यपि यशोवती परिष्वज्य तं समाघ्राय शिरसि च निर्गत्य-चरणाभ्यामेवान्तःपुरात् पौराक्रन्दप्रतिशब्दनिर्भराभिरुपरु-ध्यमानेव दिग्भिः सरस्वतीतीरं ययौ। तत्र च स्त्रीस्वभावकातरै-र्दृष्टिपातैः प्रविकसितरक्तपङ्कजपुञ्जैरर्चयित्वा भगवन्तं भानु-मिव मूर्तिरैन्द्रवी चित्रभानुं प्राविशत् इतरोऽपि मातृमरण-विह्वलो बन्धुवर्गपरिवृतः पितुः पार्श्वं प्रायात्।

अपश्यच्च स्वल्पावशेषप्राणवृत्तं परिवर्त्तमानतारकराज-मिवास्ताभिलषितन्तं जनयितारं अस्य शोकोद्रेकाद्विद्रुतश्च त्याजितः पितृस्नेहेन धैर्यमाश्लिष्यास्य सकलदुर्मदमहीपाल-मौलिमालालालितपादपद्म यावन्त तापा मुखचन्द्रमिव द्रवी-भवन्तं दन्तज्योत्स्नाजालामिव द्रवतामापाद्यमान मच्छिलाव-ण्यमिव विलीयमानं मुखचन्द्रसुधारसमिव स्यन्दमानमच्छाच्छ-मश्रु स्रोतसां सन्तानं महामिषमयविलोचन इव वर्षन्निरन्तर-मुक्तारवश्चिरं रुरोद। राजा तु तमुपरुध्यमानदृष्टिरपि रुदित-शब्दाश्रुतश्रवणप्रत्यभिज्ञः शनैरवादीत् पुत्त्र! नार्हस्येवं भवितु

भवद्विधा भव्या महात्मता हि प्रथममवलम्बनं लोकस्य पश्चा-
द्राजविनीतासत्त्वसत्त्ववतां चाग्रणीरसि सर्व्वातिशयाश्रय:
क्व भवान् क्व वैक्लव्यं तथा हि कुलप्रदीपस्त्वम सहृग्रन्तेलघु-
करणमिव पुरुषसिंहोऽसीति कुपटुप्रश्नोपहंहितपराक्रमस्य
निन्दैव सुलक्षणाख्यातचक्रवर्तिपदस्य पुनरुक्तमिव गृह्यतां
इयं श्रीरिति स्वयमेव श्रिया गृहीतस्य ते विपरीतमिव
श्रध्यास्यतामयं लोक इति उभयलोकविजिगीषोरपुष्कलमिव
शशिकरनिकरनिर्मलयश:सञ्चयैकाभिनिवेशिनो निरुपयोग-
इव स्वीक्रियतां राजलोकइति गुणगणात्मीकृतजगतावकाश-
मिव सह्यतां राज्यभारइति भुवनत्रयभारोचितस्यानुचित-
नियोगइव प्रजा: परिरक्ष्यन्तामिति ।

दीर्घदोर्दण्डात् गलितदिङ्मुखस्यानुवादइव परि-
जन: परिपाल्यतामिति लोकपालोपमानस्यानुषङ्गिकमिव
शास्त्राभ्यास: कार्यइति धनुर्गुणकिणकलङ्ककालीकृतप्रकोष्ठस्य
किमादिश्यते निग्राह्यस्चापलं जातमिति नूतनएव वयसि
निगृहीतेन्द्रियस्य निरवकाशैव वाणी निर्विशतां नेया: शत्रव
इति सहजस्य तव तेजसएवायञ्चिन्तैवं वदन्नेवापुनरुन्मीलनाय
निमिमील लोचने राजकुलसिंह: ।

अत्रान्तरे पूषापि आयुषेव तेजसा सा व्ययुज्यत ततश्च
लज्जमानइव नरपतिजीवितापहरणजनितपापरोऽधोमुख:
समभूत् । भूपालाभावशोकशिखिनेवान्तस्तप्यमानस्ताम्रतां प्रपेदे
मन्दं मन्दं प्रियप्रश्नार्थमिव स्थितिमावर्तमानो लौकिकी-
मवततार दित्सुरिव जनेशाय जलमपरजलनिधिसमीपमुप-

सर्पं सद्योदत्तजलाञ्जलिदुःखदहनदग्धमिव लोहितमयं करसहस्रम्। एवञ्च महानराधिपनिधनधीयमानविपुलवैराग्य इव शान्तवपुषि विशति गिरिगुहागह्वरं गभस्तिमालिनि मुच्यमानमहौजाश्च दुर्दिनार्द्रीकृत इवातपे रोदनाताम्रसकललोचनरुचेव लोहितायति जगति अध्यायमानानेकनरपतिसन्तापप्लुष्ट इव नीलायमाने दीने नृपानुगमनप्रचलितयेव लक्ष्म्या मुच्यमानासु कमलिनीषु पतिशुचेव परिहृतच्छायायां श्यामायमानायां भुवि कुलपुत्रेष्विव परित्यक्तनिजकलत्रेषु कृतकरुणप्रलापेषु विगतातपे जाते तेजसामधीशे गगनतलवितन्यमानबहलरागपटलायां प्रेतपताकायामिव प्रवृत्तायां शवशिखालङ्कारकृष्णचामरिकास्विव स्फुरन्तीषु दर्शनप्रतिकूलासु तिमिरलेखास्वसितागुरुकालकाष्ठायां चितायामिव रजन्यां दन्तपत्रप्रसाधितकर्णिकासु केसरमालाकल्पितमालास्वनुमर्तुमिव उद्यतासु प्रहसन्मुखीषु कुमुदलक्ष्मीष्विवतरं त्रिदशविमानकिङ्किणीरणितइव श्रूयमाणे शाखिशिखरनिलीयमानशकुनिकलकलकूजिते नाकपथप्रस्थिते प्रस्थितपार्थिवप्रत्युद्गतपुरुहूतातपत्रइव च पूर्वस्यान्दिशि दृश्यमाने चन्द्रमसि नरेन्द्रैः स्वयं समर्पितस्कन्धैरुद्धृत्य शवशिबिकां सामन्तैः पौरैश्च पुरोहितपुरःसरैः सरितं सरस्वतीं नीत्वा नरपतिः समुपचितया चिताहुताशनसंस्क्रियया यशःशेषतामनीयत।

देवो हर्षश्च पुञ्जीभूतेन सकलेनेव जीवलोकेन कुलसम्बन्धेनाशेषेण शोकमूकेन परिजनेन च परिवृतोऽन्तर्व-

तेना पितृशोकानलतप्तेन स्नेहद्रवेण वह्निरिव सिच्यमानो निर्व्यवधानायामवरश्यामुपविष्टएव निशीथिनीमेमरथीं भीमामखिलां स राजोज्जगार। अभवच्चास्य चेतसि ताते दूरीभूते संप्रत्येवायं खलु अनाथीभूतो जीवलोकः लोकस्य पन्थानो मग्नाः मनोरथानाङ्किलीभूतानि हृदयस्थानानि स्थगितान्यानन्दस्य द्वाराणि सुप्ता सत्यवादिता याचा विलीना वङ्गशालिता प्रलीना प्रियालापिता: प्रेषिता: पुरुषकारविकाराः समाप्ता स्मरशौण्डता प्रनष्टा परगुणप्रीतिः विश्रान्ता विश्वासभूमयः अपगता वदान्यता अपयातान्यपदानानि निरुपयोगाणि शास्त्राणि निरवलम्बना विक्रमैकरसता कथावशेषा विशेषज्ञता। ददातु जनो जलाञ्जलि मौर्जित्याय प्रपद्यतां प्रव्रज्यतां प्रजापालनता बध्नातु वा मनुष्यता वैधव्यवेणीं समाश्रयतु राज्यश्रीराश्रमपदं परिधत्तां धवले वाससी वसुमती वहतु वल्कले मनस्विता तपस्यतु तपोवने तेजस्विता प्राप्नोतु चीवरेण वीरता गम्यतां पुनस्तस्य कृते कृतज्ञतया क्व पुनः प्राप्स्यति तादृशात् महापुरुषनिर्माणपरमाणून् परमेष्ठी। शून्यसंपृक्ता दिशो गुणानां जगज्जातमन्धकारं धर्मस्य निष्फलमधुना जन्म शास्त्रोपजीविनां तातेन विना कुतस्तादृश्यो दिवसं समारब्धकलहकथाकण्टकितसुभटकपोलभित्तयः शूरगोष्ठ्यः।

अपि नाम स्वप्नेऽपि दृश्येत दीर्घरक्तनयनं पुनस्तन्मुखसरोजं जन्मान्तरेऽपि पुनः परिष्वज्येत तल्लोहस्तम्भाभ्यधिकगरिमगर्भं भुजयुगलं लोकान्तरेऽपि पुत्त्र! पुत्त्रेत्या

लपितं श्रूयति उद्गीरन्ती मथ्यमानसागररवोद्गारगम्भीरा भारती एतानि चान्यानि चिन्तयत एवास्य कथमपि सा क्षपा क्षयमियाय । ततः शुचेव मुक्तकण्ठमारटत्सु चक्रवाककुलेषु गृहगिरितरुशिखरेभ्यः पातयत्स्वात्मानं मन्दिरमयूरेषु परित्यक्तनिजावासेषु वनाय प्रस्थितेषु पत्ररथकुलेषु सद्यस्तनुभूते ताम्यति तमसि मन्दीभूतविषयस्नेहेष्वभिलषत्सु प्रदीपेषु स्फुरदरुणवल्कलप्रावृतवपुषि प्रव्रज्यामिव प्रतिपन्ने नभसि प्रभातसमयेन समुच्चीयमानासु पार्थिवास्थिकर्णिकास्विव कालविङ्ककन्धराधूसरासु तारकासु भूभृद्धातुगर्भकुम्भधारिषु त्रिविधरसेसु तीर्थाभिमुखेषु प्रस्थितेषु वनकरिकुलेषु शरावे शुचिसिक्थपटलपाण्डुरे पिण्ड इवापरपयोनिधितटपुलिनपरिसरे पात्यमाने शशिनि क्रमेण चन्द्रोपचितामलधूमविसरधूसरीकृते तेजस्विनरपतिशोकपावकदाहकिणकलङ्कालीकृतचेतसीव प्रोषितस्मरान्तःपुरपुरन्ध्रीमुखचन्द्रशोभादर्शनोद्वेगविद्राणवपुषीव प्रथमास्तमितरोहिणीरमणरणकविमनसीव चास्तमुपगते रजनिकरे राजनीव दिवमारूढे सवितरि परिच्छन्ने राज्य इव रजनीप्रबन्धे प्रबुद्धराजहंसमण्डल इव प्रबुध्यमानः पङ्कजाकर इव चचाल स्नानाय देवो हर्षः ।

ततश्च नूपुरविरामसूकमन्दमन्दिरहंसेषु शोकाकुलकतिपयकञ्चुकिमात्रावशेषेषु शुद्धान्तेषु पतितयूथप इव वनकरीयूथे कक्षान्तरवर्तिनि पितृपरिजने विषादिनि निरुद्धविषादिनि स्तम्भनिषण्णे निष्पन्दमन्दे राजकुञ्जरे मन्दुरापालाक्रान्तव्यथिते चाजिरभाजि राजवाजिनि विश्रान्तजयशब्दकलकले शून्ये च

महास्थानमण्डले दृश्यमानहृष्टि निर्जगाम राजकुलात्। अगाच्च सरस्वतीतीरमेव तस्याञ्च स्नात्वा पित्रोर्ददावुदकं अपस्नात-स्नानिपीड़ितमौलिरेव परिधाय उद्गमनीये दुकूले निश्चामरो निरातपत्रो निरस्तवारणः समुपनीतेऽपि सप्तौ चरणाभ्यामेव नासाग्रप्रसक्तेन रक्ततामरसताम्रेण चक्षुषा हृदयार्धस्थितस्य पितुर्दाहशङ्कया शोकाग्निमिवोद्गिरन् ताम्बूलस्यापि सरिदम्बु-प्रक्षालितस्य कल्पतरुकिसलयकोमलस्य स्वभावपाटलस्याधर-पल्लवस्य प्रभयानुविद्धान् सरसरुधिरकणानिव हृदयाभिघाता-दुद्गमन्नुष्णानिश्वासान् पुनर्भवनमेव जगाम।

राजवल्लभास्तु भृत्याः सुहृदः सचिवाश्च तस्मिन्नेवाहनि निर्गत्य त्यक्त्वा प्रियपुत्रदारकान् उद्बाष्पैर्बन्धुभिर्धार्यमाणा अपि बहुरूपगुणगणोत्कृतहृदयाः केचिदात्मानं भृगुषु बभञ्जुः केचित्तीर्थेषु तस्थुः केचिदनशनैरास्तीर्णतृणाङ्कुराः कृशयन्मनसः शुचमशमयन्। केचित् शलभा इव वैश्वानर शोकावेशविवशा विविशुः केचिद्दारुणदुःखदहनदह्यमान-विग्रहा गृहीतपादास्तुषारशिखरिणं शरणमुपययुः केचिद्वि-न्ध्योपत्यकासु वनकरिकुलशीकरासारसिच्यमानतनवः पल्ल-वशयनशायिनः सन्तापमशमयन्। केचित् सन्निहितानपि विषयानुत्सृज्य सेवाविमुखा बभूवुः केचिदाच्छोटितचूड़ा-मणिषु शिरःसु शरणीकृतधूर्जटयो जटा जघटिरे अपरे परिपाटलप्रलम्बचीवराम्बरसंवीताः स्वाम्यनुरागसुव्रती चक्रुः। अन्ये तपोवनहरिणजिह्वालतोल्लिह्यमानमूर्तयो राज्याङ्गरा-गानजरयन्। अपरे पुनः पाणिपल्लवप्रमृष्टैराताम्रराग-

नयनपुटैः कमण्डलुभिश्च वारि वहन्ती महीमण्डलं मुण्डा विवेश।

देवमपि हर्षं तदवस्थं पितृशोकविह्वलीकृतं श्रियं शाप इति महीं महापातकमिति राज्यं रोग इति भोगान् भुजङ्ग इति निलयन्निरय इति बन्धून् बन्धनमिति जीवितं यश इति देहं द्रोह इति कल्पलताकलङ्क इति आयुरपुण्यफलमित्याहारं विषमिति चन्दनन्दहन इति कालं क्रकच इति हृदयस्फुटमभ्युदयमानमिति मन्यमानं सर्वासु क्रियासु विमुखं पितृपितामहपरिगृहीताश्चिरन्तनाः कुलपुत्राः वंशक्रमाहितगौरवाश्च ग्राह्यगिरो गुरवः श्रुतिस्मृतीतिहासविशारदाश्च महामुनयः संसारासारताकथनकुशलाश्चलशीलाश्च ब्रह्मवादिनः शोकापनयननिपुणाश्च पौराणिकाः पर्यवारयन्। अस्वतन्त्रीकृतश्च तैर्मनसापि नालभत शोकानुप्रवणाद्धरितुमनुनीयमानश्च कथं कथमपि आहारादिक्रियास्वाभिमुख्यमभजत आत्मगतश्च हृदयेनाचिन्तयत् अपि नाम तातस्य महाप्रलयसदृशमिदमुपलभ्यार्यो बाष्पजलस्नातो न गृह्णीयाद्वल्कलेनाश्रयेद्वा राजर्षिराश्रमपदं न विशेद्वा राजसिंहो गिरिगुहां अश्रुसलिलनिर्भरनयननलिनयुगलो वा न पश्येदनाथां पृथिवीं प्रथमव्यसनविह्वलोऽस्मि चरेदात्मानं पुरुषोत्तमः अनित्यतया जनितवैराग्यो न निराकुर्य्यात् उपसर्पन्तीं राजलक्ष्मीं दारुणदुःखदहनज्वलितदेहो वा न प्रतिपद्येताभिषेकं इहागतो वा राजभिरभिधीयमानो न पराचीनमाचरेत्। अतिपितृपक्षपाती खल्वार्यः सर्वदा तात! श्लाघा-

मभिधत्ते तात! हर्ष! न कस्यचिदभूत् भविष्यति वा पुनः काञ्चनतलतरुप्रांशुकायप्रमाणमिदं इदञ्च दिवसकरप्रीत्या दिवसमुन्मुखं विकसितमुखकमलमेतौ वज्रस्तम्भभासुरौ भुजावेते चापहसितमदालसहलधरविभ्रमा विलासाः कोऽन्योऽमानि विक्रान्तो वदान्योवेति एतानि चान्यानि चिन्तयन् दर्शनोत्सुकहृदयो भ्रातुरागमनमुदीक्षमाणः कथं कथमप्यतिष्ठदिति।

इति श्रीहर्षचरिते पञ्चमोच्छ्वासः।



## अथ षष्ठोच्छ्वासः।

उच्चित्योच्चित्य भुवि प्रथितनिगूढासमद्युतीनाम्।
विजिगीषु रिव कृतान्तः शूराणां संग्रहं कुरुते॥
विस्रम्भघातदोषः स्वयंवधाय खलस्य चिरकोपकरः।
वनतरुभङ्गध्वनिरिव भूभरिनिद्रातस्करः करिणः॥

अथ प्रथमप्रेतपिण्डभुजि भुक्ते द्विजन्मनि गतेषूद्वेजनीयेष्वशौचदिवसेषु चक्षुर्दाहदायिनि दीयमाने द्विजेभ्यः शयनासनचामरातपत्रादिके भूपतिनिकटोपकरणकलापे नीतेषु तीर्थस्थानानि हृदयैर्वीरकीकसेषु कल्पिते शोकशल्ये सुधानिचये चिताचैत्यचिह्ने अवनीनाथविसर्जिते महार्जितराजकुञ्जरे क्रमेण च मन्देष्वाक्रन्देषु विरलीभवत्सु विलापेषु विश्राम्यत्यश्रुणि शिथिलीभवत्सु श्वसितेष्वविस्पष्टेष्वाकृष्टशब्देषूत्सार्यमाणासु व्यसनशय्यासूपदेशश्रवणक्षमेषु श्रोत्रपथेष्वनुरागरोधनयोग्येषु हृदयेषु विरलताङ्गतेषु नृपगुणग्रहणेषु प्रदेशवर्तितामाश्रयति शोककृतेषु कविरुदितेषु जातिस्वप्नावशेषदर्शने हृदयावशेषावस्थाने चित्रावशेषाकृतौ काव्यावशेषनाम्नि नरनाथे देवोहर्षः कदाचिदुत्सृष्टव्यापारेण पुञ्जीभूतहृद्बन्धुवर्गाग्रेसरेणानवरतमूकमुखेन महाजनेनात्मानं अकाले परिवेष्ट्यमान मद्राक्षीत्।

दृष्ट्वा चाकरोन्मनसि किमन्यदार्यमागतमावेदयत्यय मस्पष्टीतशोकाक्रान्तो लोकस्याकार इति वेपमानहृदयश्च पप्रच्छ प्रविशन्तमधिकतरमन्यतमम् भद्र ! कथय किमार्यः प्राप्त इति स मन्दमब्रवीत् देव ! यथाविशति द्वारीति श्रुत्वा च सोदर्यस्नेहनिश्छितनिरतिशयमन्युमृदूनमना: कथमपि न ववाम बाष्पवारि प्रवाहोत्पीडेन सह जीवितं अनन्त-रश्च द्वारपालमुक्तेन प्रथमप्रविष्टेन शैशवएवाशाश्छि गुणव-त्पताकेव भवता तातस्य चित्तवृत्तिः यतो भवन्तमेवम्विधं विधेयं विधिविधानोपनीतनैष्ठुर्य्यमिदं किमपि विगणयति मे हृदयं नावलम्बनीया बालभावसुलभा प्रेमविलोमभा-वता वैधेय इव माऽन्यथाः प्रत्यूहमभिहितेऽस्मिन् शृणु न खलु न जानासि लोकवृत्तं लोकत्रयत्रातरि मान्धातरि कृतं पुरुकुत्सेन भूतलादिष्टाष्टादशद्वीपे दिलीपे वा रघुणा महासुरसमरमध्य मध्यासितत्रिदशरथे दशरथे वा रामेण गोष्प-दीकृतचतुरुदन्वन्तं दुष्यन्तं वा भरतेन तिष्ठन्तु तावदेते ता-तेन च शतसमाधिकाध्वरधूमधूसरितस्वयशसि सुस्पष्टीतमाश्रि तत्रभवति परेततामुपगतवति तव पितरि किमाकारि राज्यम् ।

यश्च शोकः समभिभवति तश्च कापुरुषमाचक्षते शास्त्रविदः स्त्रियो हि विषयः शुचां तथापि किं करोमि स्वभावस्य सेयं कापुरुषता स्त्रैणं वा यदेवमास्वाद्य पितृशोकहृतभुजो जातो-ऽस्मि मम हि भूभृति पर्यस्ते निरवशेषतः प्रस्रवणानीव सूतानि श्रुतानि अस्तमिते महति तेजसि अन्धकारीभूतदशाश इव भ्रष्टप्रज्ञो लोकः प्रज्वलितं हृदयमात्मदाहभीतइव स्वप्नेऽपि

नोपसर्पति विवेकः बलीयसा सन्तापेन जातुषमिव विलीन-मखिलं धैर्यं पदे पदे उपहतेव हरिणी मुह्यति मे मतिः पुरुषद्वेषिणीव दूरतएव भ्रमन्ती परिहरन्ती स्मृतिः वार्धुषिक-प्रयुक्तानीव प्रतिदिवसं वर्द्धन्ते दुःखानि शोकानलधूमसम्भार-सम्भूताम्भोधरभरितमिव वर्षति नयनवारिधाराविसरं शरीरं सर्वंपश्यजनः पश्चतामुपरतः प्रयातीति विततमिदं लपति चपलो लोकः तातो मे ऊतानतामेव केवलमापन्नः येनैवमयं मां दहति एव मयं सांपरायिकमिव हृदयमवष्टभ्य व्युत्थितः शोकोदुर्निवारो बान्धव इव वारिराशिं पविरिव पर्वतं क्षय-इव क्षपाकरं राहुरिव रविं दहति क्षयति तनूकरोति कवलयति च मां न शक्नोति मे हृदयं तादृशस्य सुमेरुकल्पस्य पुरुषकल्पस्य विनिपातमश्रुभिरेव कैवलैरतिवाहयितुं राज्ये विषयइव चकोरस्य विरक्तं मे चक्षुः वङ्कुतकर्पटकलतावकुण्ठ-नां जङ्गमाङ्गनामिव वंशबाह्यां नार्यां श्रियं निराकर्तुमभिल-षति मे मनः क्षणमपि निर्जले कूपे कुलीरइव देशे न पार-यामि स्थातुं सोऽहमिच्छामि मनसि वाससीव सुलग्नं स्नेह-मलममलैः शिशिरि शिखरि प्रस्रवणस्वच्छस्रोतोभिः क्षालयितु-माश्रयितुमाश्रमपदे यतस्त्वमन्तरितयौवनसुखामनभिमतामपि जरामिव पूर्वराश्रयां महाप्रेमां राज्यचिन्तां त्यक्तसकलबाल-क्रीडेन हरिणेव दीयतामुरोलक्ष्म्यै परित्यक्तं मया शस्त्रमिति अभिधाय खड्गग्राहिणो हस्तादादाय निजनिस्त्रिंशमुत्ससर्ज धरण्याम् ।

अथ तच्छ्रुत्वा निशितशिखरेण शूलेनेव ताडितः प्रविदीर्णहृदयो देवो हर्षो समचिन्तयत् किं नु खलु माम-

न्तरेणार्यः केनचिदसहिष्णुना किञ्चिद्गाहितः कुपितः स्यात् उतानया दिशा परीक्षितुकामो मां उत शोकजश्चेतःसाक्षेपः स्यात् आहोस्विदार्य एवायं न भवति किं वार्येणान्यदेवाभिहितमन्यदेवाश्रावि मे शोकशून्येन श्रवणेन्द्रियेण आर्यस्यान्यदेतवीक्षितमन्यदेवापतितं मुखे अथवा सकल वंशविनाशाशनिपातो विधेरयं अथवा निखिलपुण्यक्षयोपक्षेपः कर्मणां अननुकूलसमग्रग्रहचक्रवालविलसितं वा येनैवायं यः कश्चिदिव यत्किञ्चन कारिणमिव मां पूर्वप्रभृतिवंशधर्म्मं तमिवाततायिनमिवानात्मानुजातङ्कमिवादृष्टदोषमपि श्रोत्रियमिव सुरापाने सङ्कृत्यमिव स्वामिद्रोहसज्जनमिव नीचोपसर्पणे सुकलत्रमिव व्यभिचारे मामतिदुष्करे कर्मणि समादिष्टवान्।

अथवा तदेतत्तावदनुरूपं यच्छौर्योन्मादमदिरोन्मत्तसमस्तसामन्तमण्डलसमुद्रमथनमन्दरे पितरि प्रमिते तपोवनं वा गम्यते वल्कलानि वा गृह्यन्ते तपांसि वा तप्यन्ते यत्तु मयि राजाज्ञा दग्धेऽपि दाहकारिणि धम्मनीवाङ्गारवृष्टिस्वसदृशमार्यस्य यद्यपि रिपुरनभिमानोद्विजातिरनेषणो मुनिररोषणः कपिरचलः कविरमत्सरो वणिगतस्करः प्रियजानिरकुहकः साधुरदरिद्रोद्रविणवानखिलः कीनाशोऽनक्षिगतो मृगयुरहिंस्रः पराशरी ब्रह्मण्यसेवकः सुखी कितवः कृतघ्नः परिव्राडबुभुक्षुः शठः प्रियवागमात्यः सत्यवादी राजसूनुः अदुर्विनीतश्च जगति दुर्लभः तथापि ममार्य एवार्यः को हि नाम तद्विधे पतिते राजकुञ्जरे जनयितरीदृशे च विफलीकृतशिलास्थम्भाभभुजि भूभुजि भ्रातरि त्यक्तराज्ये ज्यायसि तपोवनं गच्छति सकललोकलोचनजलपाताशावितं मृद्वोलकं

वसुधाभिधानं मदखेलनिखिलमुखविकारलक्ष्मा ख्यातनीचाचाराश्च श्रीसंज्ञकां सुभटकुटुम्बकर्मकरकुम्भदासीश्चण्डालोऽपि कामयते कथमिव सम्भावितमत्यन्तमनुचितमार्येण किमुपलक्षितं मध्यनवदातं कर्म किं वास्य चेतस इत्थं च्युतः सौमित्रिः विस्मृता वा वृकोदरप्रभृतयः अनपेक्षितभजना स्वार्थैकनिष्पादननिष्ठुरा चेयमार्यस्येदृशी प्रभविष्णुता अपि च आर्ये तपोवनं गते जिजीविषुः कोनाम महीं मनसापि ध्यायेत् ।

कुशशिखरखरनखरप्रचयचटुलपेटपाटितमत्तमातङ्गमदच्छटाच्छुरितकेसरसटाभारभासुरमुखे केसरिणीव वनविहाराय निर्गते निवासगिरिगुहान्तःपातिपृष्ठतः प्रतापसहाया हि सत्ववन्तः कश्चपलां राजलक्ष्मीं प्रत्यनुरोधोऽयमार्यस्य इयमपि वनंतरुरुचिरचीवरान्तरितकुचा कुसुम्भसमित्पलाशपूलिकां वहन्ती तत्रैव तपोवने वनमृगीव नीयते जरां जाल्मी- किं वा ममानेन वृथाबहुधा विकल्पितेन तूष्णीमेवैनमार्यमनुगच्छामि गुरुवचनातिक्रमकृतं च किल्बिषन्तपोवने तपएवापास्यतीति अवधार्य मनसा प्रथमं गतस्तपोवनं तुष्णीमेवा धोमुखोऽतिष्ठत् ।

अत्रान्तरे पूर्वोद्दिष्टेनैव वल्ककर्मान्तिकेन समुपस्थापितेषु वल्कलेषु निर्दयकरतलताडनभियेव कम्पितहृदये रटति स्वैणे मातर मब्रह्मण्यमित्यूर्द्धदोर्ष्णि विरुतवति विप्रजने पादप्रणतिपरे पूत्कुर्वति पौरवृन्दे विद्राति विद्रुतचेतसि चिरन्तने परिजने परिजनावलम्बिते वेपमानवपुषि पर्याकुलवाससि शोकगद्गदवचसि गलितनयनपयसि विशति वर्षीयसि- बन्धुवर्गे निराशेषु नखलिखितमणिकुट्टिमेष्वधोमुखेषु निश्व-

सत्सु सामन्तेषु सबालवृद्धासु तपोवनाय प्रस्थितासु प्रजासु सहसैव प्रविश्य शोकविक्लवः प्रच्चरितनयनयुगलोराज्यश्रियः परिचारकसम्भवादकोनाम प्रख्याततमोविमुक्ताक्रन्दः सदस्यात्मान मपातयत्।

अथ सम्भ्रान्तो भ्राता सह स्वयमेव राज्यवर्द्धनस्तं पर्यपृच्छत् भद्र! भण किमस्मद्व्यसनविवर्धनबन्धभृतिरवनिपतिमरणमुद्रितमतिष्टतिकारमपरमधिकतर मितः समुपनयति विधिरिति स कथं कथमप्यकथयत् देव! पिशाचानामिव नीचात्मनां त्वरितानि च्छिद्रप्रहाराणि प्रायशो भवन्ति यतोऽन्यस्मिन्नेवाहन्युपरतइत्यभूद्वार्ता तस्मिन्नेव देवो ग्रहवर्मा दुरात्मना तालवराजेन जीवलोकमात्मनः सुकृतेन सह त्याजितभर्तृदारिकापि राज्यश्रीः कालायसनिगड़चुम्बितचरणा चौराङ्गनेव संयता कन्याकुब्जे कारायाञ्चिक्षिप्ता किंवदन्ती च यथा किलनायकं साधनं जिघृत्सुः सुदुर्मतिरेनामेव भुवमागमिष्यतीति विज्ञापिते प्रभुः प्रभवतीति तं च तादृशमनुत्प्रेक्षितमसम्भावनीयमाकस्मिकं परमाकर्ण्याश्रुतपूर्वत्वात् परिभवस्य परिभवासहिष्णुतया स्वभावस्य वीरक्षेत्रसम्भवा जन्मनः क्षमाभूमितया स्वसुः सोदर्यस्नेहाच्च स तादृशो बहुकुलोऽप्यन्तर्गुरुरेकपदएवास्य न माशोकावेगो विवेश च सहसा केसरीव गिरिगुहागृहं गम्भीरं हृदयम्।

भयङ्करः कोपावेगकेशिसूदनशङ्काकुलकालीयभङ्गुरा भ्रूभङ्गतरङ्गिणी श्यामायमाना यमस्वसेव प्रथीयसी ललाटपट्टे: भूषणभ्रूकुटीरभिद्यत दर्पात् पराङ्मन्नखकिरणसलिलनिर्झरैः समरसम्भारसम्भाषणाभिषेकमिव चकार दिङ्नाग-

कुम्भकूटविकटस्य वाङ्गशिखरस्य दक्षिणस्य वामपाणिपल्लव-
युगलस्वेदसलिलपूरितोदरो निकुलमालवकुलनाशगृहीतकेश
इव निर्मर्यादश्रीकचग्रहोत्कण्ठ एव च कम्पमानः पुनरपि
समुत्ससर्प च भीषणां कृपाणं पाणिरितरश्शस्त्रग्रहण-
मुद्रितराजलक्ष्मीक्रियमाणदृष्टिदृष्टिविधुतसिन्धुरधूलिरिव क-
पिलः कपोलयोरदृश्यत रोषरागः समासन्नसकलमहीपाल-
चूडामणिमणिजाताहङ्कार इव समारुरोह वाममूरु-
दण्डमुत्तानितो दक्षिणश्चरणः निष्ठुरन्तमकषणनिष्ठुरधूमले-
खोनिर्वीरोर्वीकरणाय विमुक्तशिख इव विलिलेख मणिकुट्टि-
ममितरः पादपद्मदर्पस्फुरितसरसनखोच्छलितशोणितच्छटाव-
सेचनकैः शोकविषं प्रषेक्तुं बोधयन्निव पराक्रमनुजमवादीत्
आयुष्मन्निदं राजकुलममी बान्धवाः परिजनोऽयं भूपतिभुजा-
परिघपरिपालिताश्च ताः प्रजाः गतोऽहमद्यैव मालवकुलमहा-
प्रलयायेदं वै तावद्वल्कलग्रहणमिदमेव तपःशोकोपायश्चायं यद-
यमत्यन्ताविनीतारिनिग्रहः सोऽयं कुरङ्गैः कचग्रहः केशरिणो-
भकैः करभातः कालसर्पस्य धेनुवत्सकैर्वन्दीकचग्रहो व्याघ्रस्याल-
गर्द्दैर्गलाक्षेपो गरुडस्य दारुभिर्दाह्यादेशो दहनस्य तिमिरैस्ति-
रस्कारो रवेर्यो मालवैः परिभवः पुष्पभूतिवंशस्य अन्तरितस्तातो
महीयसा मुक्ता तिष्ठन्तु राजानः करिणश्च त्वयैव सार्द्धं अय-
मेको भण्डिरयुतमात्रेण तुरङ्गाणामनुयातु मामित्यभिधाय
चानन्तरमेव प्रयाणपटहमादिदेश ।

तस्य तथादिशन्तमाकलय्य यामि जामातृवक्रान्तप्रको-
पयानदूयमाने मनसि निवर्तनादेशप्ररूढप्रणयार्पितवाष्प इव
प्रोवाच देवो हर्षः किमिव हि दोषजातमार्य ! पश्यति मया-

प्यनुगम्यमानो यदि बालइति नितरान्नपरित्याज्योऽस्मि रक्षणीयइति भवद्भुजपरं रक्षाजातं अयन्नइति अपरीक्षितोऽस्मि सम्बर्धनीयइति वियोगस्तातं करिष्यति अक्लेशसहइति स्त्रीपक्षे निक्षिप्तोऽस्मि सुखमनुभवत्विति त्वयैव तत्प्रयाति महानध्वनि क्लेशइति विरहाग्निरविपह्यतरः कलत्रं रक्षत्विति श्रीस्ते निस्त्रिंशे वसति पृष्ठतः शून्यमिति तिष्ठत्येव ते प्रतापः राजकमलाधिष्ठितमिति तत्तु बहुमास्व ततोत्तप्तसुवर्णकाग्निभिरतिव्यायामादुत्कठिनकायबन्धैः करकलितश्रीमद्रामकविवक्त्रसरोजातं नानारसान्वितं कवित्वरसमधुनिकरं श्रीमद्रामकल्पतरुं भजध्वं तिष्ठत्यसावनुदिनं सहजेन्द्रपार्श्वदातेति रोहणगिरिः प्रथितोऽपि लोके तासात् प्रसादमये कठिनो बभूव ।

त्वं चापि संप्रति मम च विशेषदाता प्रीत्यभ्युन्नये साहजीन्द्रहठगातमनोविकारशून्यस्य संसदि पराभियुगेषु दानं चारुः सा त्वमहह इति व्यतिरिक्तमेव माङ्गणयसि प्रलघुपरिकरः प्रयामीति पादरजसि कोऽतिहारः हयोर्गमनमसांप्रतमिति मामनुग्टहाण गमनाज्ञया कातरोऽस्मात्स्नेहइति सहशोदोषः काचेदमात्महारता भुजस्येति यदेकाकी क्षीरोदफेनपटलपाण्डरमक्षतमर्यमिव यशोयियासतीव अवक्षितपूर्वोऽस्मि प्रसादितः तत्प्रसीदत्वार्यो नयतु मामपीति एवमभिधाय क्षितितलविनिहताञ्जलिः पादयोरपतत् तमुत्थाप्य पुनरग्रजोजगाद तात ! किमिव मतिमहारम्भपरिग्रहणपरिमाण मारोप्यते बलादतिलपिताम्यभितः हरिणार्थमतिक्लेपणाः सिंहसम्वादसंनाहः तृणमुपरि कवचयन्त्याशुशुक्षणयः अपिच ।

तवाष्टादशद्वीपेषु अष्टमङ्गलमालिनी मेदिन्या सतएव विक्रमस्य विषयः न हि कुलशैलनिबद्धवाहिनो वायवः सह्यन्ति तरले कुलराशौ सुमेरुवप्रपरिणतिप्रगल्भवाद्दिक्करिणः परिणमन्त्यणीयसि वल्मीके ग्रहीष्यसि सकलपृथ्वीपतिप्रलयोत्पातमहाधूमकेतुर्मान्धातेव चारुचामीकरपत्रलतालङ्कारं कायं ककुभां विजयायातुरायामस्यां विपक्षक्षपणक्षुभितायां क्षम्यतामयमेकाकिनः कोपबलएक स्तिष्ठतु भवानित्यभिधाय तस्मिन्नेवावसरे निर्जगाम जगाम च क्षयमिक्षम्।

अथ तथागते भ्रातर्युपरते च पितरि प्रोषितायाञ्च मातरि संयतायाञ्च स्वसरि यूथभ्रष्ट इव वनकरी देवो हर्षः कथं कथमपि एकाकी कालमनैषीत् अतिक्रान्तेषु बहुषु वासरेषु कदाचित्तथैव भ्रातृगमनदुःखासिकताञ्च देवो हर्षः सुतरामनित्यताभावनया दूयमानमानसः क्षीणभूयिष्ठायां क्षपायां कथमपि निद्रामलभत स्वप्ने चाभ्रंलिहं लोहस्तम्भं भज्यमानमपश्यत् उत्कम्पमानहृदयः प्रत्यबुध्यत अतर्कयच्च किन्नु खलु मामेव मर्मी सन्ततं न बध्नन्ति दुःस्वप्नाः स्फुरन्ति च दिवानिशं कल्याणाख्यानविचक्षणमदक्षिणमक्षि मे दारुणाश्चास्मद्दुःखपक्षमाचक्षाणाः क्षणमपि न शाम्यन्ति पुनरुत्पाताः प्रत्यहं राहुरविकलकायबन्ध इव कबन्धवति ब्रध्नबिम्बे विभाव्यते तपःकरणकालकवलितानीव धूसरितसमग्रग्रहानुद्गिरन्ति धूमोद्गारान् सप्तर्षयो दिने दिने दारुणदाहभस्मकरणनिकरा इव निर्वाणतेजसो निपतन्ति नभस्थलात्तारागणाः तारापातशुचेव निष्प्रभः शशी निशि निशि ततस्ततः प्रज्वलन्तीभिरुल्काभिरुदग्रग्रहयुद्धमिव वियति विलोकयन्ती विलोलता-

रक्ताः ककुभः राजसंक्रान्तिसूचकाः सञ्चारयन्तीव कापि वहन् बकुलरजःपटवासकलितशर्करायमाणशाकारीमिव ततोमन्दौं न खलु कुशलमिव पश्यामि लग्नस्यास्मद्वंशैकरिणा इव करे वाणीरं कोमलमपि कवलयतः कृतान्तस्य परिपन्थि सर्वथा स्वस्ति भवत्वार्यायेति चिन्तयित्वान्तर्भिन्नं भ्रातृस्नेहकातरं द्रवतीव हृदयं कथं कथमपि संस्तभ्योत्थाय यथाक्रियमाणं क्रियाकलापमकरोत्।

आस्थानगतस्य सहसा प्रविशन्त मनुप्रविशता विषण्णवदनेन लोकेनानुगम्यमानं असह्यदुःखोष्णश्वासधूमरक्ततन्तुनेव मलिनेन पटेन प्रावृतवपुषञ्जीवितधाराविलज्ज एवावनतमुखन्नासावंशस्याग्रे ग्रथितदृष्टिं दुःखदूरप्ररूढरोमृणा मूकेनापि मुखेन स्वामिव्यसनमविच्छिन्नैरश्रुभिर्विज्ञापयन्तं कुन्तलनामानं बृहदश्ववारं राज्यवर्धनस्य प्रसादभूमिं प्रज्ञाततमं ददर्श । दृष्ट्वा च जातशङ्कश्चक्षुषि सलिलेन मुखशोषिणि श्वसनेन हृदये कृताशनेनोत्सङ्गे भुवा दारुणप्रियश्रवणसमये सममिव सर्वेष्वङ्गेषु अगृह्यत लोकपालैः तस्माच्च हेलानिर्जितमालवानीकमपि गौडाधिपेन मिथ्योपचारोपचितविश्वासमुक्तशस्त्रमेकाकिनं स्वभवनएव भ्रातरं व्यापादितं शुश्राव। श्रुत्वा च महातेजस्वी प्रचण्डकोपपावकप्रसरपरिपीयमानशोकावेगः सहसैव उज्ज्वाल। ततश्चामर्षविधूतविशीर्यमाणा शिखामणिसकलमङ्गारतामिव गतं रोषाग्निमुद्वहन्ननवरतस्फुरितेन पिबन्निव सर्वतेजस्विनामायूंषि रोषनिर्भुग्नेन दशनच्छदेन लोहितायमानलोचनालोकलेपैर्दिग्दाहानिव दर्शयन् रोषाग्निनाप्यसह्यसहजशौर्योष्मणा दह्यमान इव वितन्यमानस्वेदसलिलशीकरदुर्दिनैः स्वावय-

वैरस्य दृष्टपूर्वकोपभीतैरिव कम्पमानैरुपेतो हर इव कृतभैरवाकारो हरिरिव प्रकटितनरसिंहरूपः सूर्यकान्त इव परतेजःप्रसरदर्शनज्वलितः क्षयदिवस इवोदितद्वादशदिनकरदुर्निरीक्ष्यमूर्तिरुत्पातमारुत इव सकलभूभृत्कम्पकारी विन्ध्य इव विवर्धमानविग्रहोत्सेधो महाशीविष इव दुर्नरेन्द्राभिभवरोषितः पारिक्षित इव सर्वभोगिदहनोद्यतो वृकोदर इव रिपुरुधिरपानतृषितः सुरगज इव प्रतिपक्षवारणप्रधावितः पुरोहित इव पौरुषस्य उन्माद इव मदस्यावलेप इवावलेपस्य तारुण्यावतार इव तेजसः सर्वोद्योग इव दर्पस्य युगावतार इव यावनोष्मणः राज्याभिषेक इव समररसस्य नीराजनदिवस इव सहिष्णुतायाः परां भीषणतामयासीत् ।

अवादीच्च गौड़ाधममपहाय कस्तादृशमहापुरुषन्तद्वश्य एव निर्व्याजभुजवीर्यविजितसमस्तराजकं मुक्तशस्त्रं कलशयोनिमिव पुष्पवर्मप्रसूतिरीदृशः सर्ववीरलोकगर्हितेन मृत्युनाशमयेदार्यं अनार्यं च त मुक्ताफेनपटलपाण्डराः केषां मनःसु हंसा इव परशुरामस्मृतिकृतोऽनुकुर्युरार्यस्य शौर्यगुणाः पक्षपातं कथमिवात्युग्रस्यार्यजीविताहरणे निदाघरवेरिव कमलाकरसलिलशोषणेन प्रेषितप्रीतयः प्ररूढाङ्कुराः कान्नु गतिं गमिष्यति कां वा योनिं प्रवेक्ष्यति कस्मिन्वा नरके पतिष्यति न श्वपाकोऽपि एवमाचरेत् नामापि गृह्णतोऽस्य पापकारिणः पापमनेन विलिप्यत इव जिह्वा किं ह्यङ्गीकृत्य कार्यन्तेन क्षुद्रेणानुप्रविश्य विगतछ्णेनेव सकलभुवनभारभरणाह्लादचतुरश्चन्दनस्तम्भ इव क्षयमुपनीतः अनेन मूढेन मधुरसास्वादनलुब्धेन मम चार्यजीवितमाकर्षता भा-

विना दृष्टः कष्टशिलीमुखसम्पातोपद्रवाः निजग्रहदूषणाजाओग्रमार्गं दीपकेन कज्जलमलिनं केवलमयशः समर्ज्जितं मान्यास्तएवास्त मुपगते पितृभुवनचूड़ामणौ सवितरि वेधसा दृष्टसत्त्वघस्रो-रन्धकारस्य निग्रहाय ग्रहतकष्टवडविस्तारैर्हरिणाधिपः शशी विनयविधायिनि भग्ने चाङ्कुश एव विद्यते व्यालवारणस्य नि-ग्रहाय सकलमत्तमातङ्गकुम्भस्थलस्थिरशिरोभागभिद्दुःखतरः केशरिनखः तादृशः कुले कटिका इव तेजस्विरत्नविनाशकाः कस्य न वध्याः केदानीं यास्यति दुर्बुद्धिरिति एव मभिदधत-एवास्य पितुरपि पितुः सेनापतिः समग्रविग्रहाग्रसरो ह-रितालशैलावदातदेहपरिणतमगुणशालप्रकाण्डप्रांशु रतिशौ-र्येणेव परिपाक मुपगन्ता गतभूयिष्ठे वयसि वर्त-मानो बहुविधशयनसुप्तोत्थितेनापहसितमिव शान्तनवमप्यति-दीर्घेणायुषा दुरभिभवशरीरतया जरयापि भीतभीत एव प्रकटकम्पया परामृष्टः कथमपि मानमयेषु शिरोरुहेषु शशि-करनिकरशीततरलशिरोरुहसयतः सैंहमिव निष्कपट परा-क्रमरसरचितां संक्रान्तोजीवन्नेव जातिमपरमपरं स्वामिमुख-दर्शनयातकपरिजिहीर्षयेव भ्रूयुगलेन पलितप्रशिथिलप्रलम्ब चर्मणा स्थगितदृष्टिस्थूलश्मश्रुपिच्छच्छादितकपोलभागभासुरो वमन्निव विक्रमकालेऽपि विकासिकाशकाननविशदं शरदारम्भ गम्भीरेण मुखेन मृतमपि हृदयस्थितं स्वामिनं सितवागुरे-णेवाभिविजयन्नानाभिलक्ष्येण कूर्चकलापेन परिणामेऽपि धौतासिधाराजलदृषितैरिव विद्रुतवदनै र्हहृद्गर्वविस्तारैर्विष-मितविशालवक्षाः अतिनिशितशस्त्रटङ्ककोटिकटितबहुदृहदू-घुणाक्षरपङ्क्तिनिरन्तरतया लिखितसकलसमविजयपर्वा पूर्व-

पर्वत इव पादचारी विविधवीरवृत्तान्तरसरामणीयकेन महाभारतमपि लघयन्निव प्रतिपक्षेणातिनिर्बन्धेन परशुराममपि शिक्षयन्निवाभ्रमणादरः श्रीसमाकर्षणविभ्रमेण मन्दरमपि मन्दयन्निव वाहिनीनायकत्वेऽपि मर्यादानुवर्त्तनेनाम्भोधिमभिभवन्निव स्थैर्यकारकस्योन्नतिभिरचलानपि ह्रेपयन्निव सहजप्रचण्डतेजःप्रसरविस्फुरणेन सवितारमपि तृणीकुर्वन्निवेश्वरभारोद्वहनदृष्टपृष्ठतया हरवृषभमपि हसन्निवारणिरमर्षाग्नेरैश्वर्यं शौर्यस्य मदो मदस्य विटपो दर्पस्य जीवितं विजिगीषुतायाः समुच्छ्वसितमुत्साहस्याङ्कुशो दुर्दमनागानान्नागमर्दनो दुष्टभोगिनां विरामोपरमोमनुष्यतायाः गुरुकुलं वीरगोष्ठीनां तुलाशौर्यशालिनां सीमन्तहस्ता शस्त्रग्रामस्य निर्वोढा प्रौढवादानां संस्तम्भयितेव भग्नानां प्रारभः प्रतिज्ञानां मर्मज्ञो महाविग्रहाणां घोषणापटहः समरार्थिनां सन्निधातेव समुपविष्टः सिंहनादनामा स्वरेणेव दुन्दुभिनिर्घोषगम्भीरेण सुभटानां समररसमानयन्निव विज्ञापितवान्।

तेन क्वचित् कृताश्रयया मलिनया मलिनतराः कोकिलया काकाइव कापुरुषोहतलक्ष्म्या विप्रलभ्यमाना न चेतयन्ते श्रियो हि दोषान्धतायाः कारणम्। कामिला विकारा इव कृतच्छायान्तरिततनवोऽभिविस्मरन्त्येव तेजस्विनं जड़धियः किं करोतु वराकः येनातिभीरुतया नित्यपराङ्मुखेन दृष्टान्येव सर्वातिशायिशौर्यश्लथमधुकपिलकपोलपुलपल्लवितकोपानलानि तेजस्विनां मुखानि नासौ तपस्वी जानात्येव यथा अभिचारा इव विप्रकृताः सौम्याः

सकलकुलप्रलयमुपहरन्ति मनस्विन इति ज्वलोऽपि च ज्वलन्ति ताडितास्तेजस्विन इति सकलवीरगोष्ठीबन्धुस्य तस्यैवेदमुपचितमनुस्मारणविनिपातननिपुणं कर्म मनस्विनां हि प्रधनप्रधाने धनुषि श्रूयमाणे सति च कमला कलहंसी-केलि कुवलयकानने कृपाणे कृपाणोपाया: पयोऽभिमथन-प्रभृतयोऽपि श्रीसमुत्थानस्य किं पुनरीदृशा: एणाङ्क धाता धात्रीं त्रातुं नियुक्ता: स्वयमशक्ता इव कुलिशकर्कशभुजपरिघ-प्रहरणहेतोर्बिभ्रति गिरयोऽपि लोहानि ते कथमिव बाहु-शालिनो मनसापि विमलयशोबान्धवाध्या येनुरकार्यं सर्वशङ्काभि भवभासुराणां हि सुभटकराणामग्रतोदिग्गहणे पल्लव: पतङ्ग-करा: महामणिषण्डभङ्गुरभीषणान्तरालाखिललोकप्रवादमा-त्रैव दक्षिणाशा तत्त्वत: सुभटभ्रूकुटीरथवा सोमस्य चित्रेदं यदुन्मुक्तसिंहनादानां साहससरभससमररसोच्चरोमाञ्चकन-कानिकरेण सहसा निर्यान्ति रटा: शूराणां रणेषु हृदयमेव चतु:सागरसम्भूतस्य भूतिसम्भारस्य भाजनं प्रतिपक्षदाहि-दारुणं वडवामुखं महापुरुषहृदयं वा तेजस्विन: सकलानन-वाप्य पयोराशिसहजस्य कुतो निर्वृतिरुष्मणः इया विपुल-फणाभारो भुजङ्गमानां मुदाबिभर्ति भोगेन क्षितिमण्डमेव केवलं अप्रतिहतशासनं कान्त्युपभोगरसन्तु रसाय दिक्कुञ्जर-करभासुरप्रकोष्ठा वीरबाहवएव जानन्तिरविरिवोन्मुखपद्मा-करग्टहीतपादपल्लव: सुखेनाखण्डिततेजा दिवसन्नयति शूर: ।

इतरस्य तु शशिन इव हरिणहृदयाभिपाण्डरपृष्ठस्य कुतो-द्विरात्रमपि निश्चला लक्ष्मी भविष्यत्यपरिमितयश:प्रकर्ष-विकासी वीरास्य: पुर:प्रवृत्तप्रभाप्रहता: पन्थान: पौरुषस्य

शब्दविद्रुतद्विषन्ति द्वाराणि दर्पस्य शास्त्रालोकप्रकाशिताः शून्या दिशः शौर्यस्य रिपुरुधिरशीकरासारेण भूरिव शूरोऽप्यनुरज्यते बहुनरपतिमुकुटमणिशिलाशाणाचेपणेन चरणनखराजिरिव राजताप्युज्ज्वलीभवति अनवरतशस्त्राभ्यासेन करतलानीव रिपुमुखान्यपि श्यामीभवन्ति विपुलव्रणपट्टबन्धशितैः शरीरमिव यशोभिर्धवलीभवन्ति कर्वचिषु रिपूरःकवाटेषु पात्यमानां पावकशिखामिव श्रियमपि वमन्ती निष्ठुरा निस्त्रिंशप्रहाराः यस्याहितहतस्वजनो मनस्विजनोद्विषद्दुरन्तम्भनेन कथयन्ति हृदयदुःखं पुरुषासिलताघनपातपवनेनोच्छ्वसति शत्रुशरीरास्त्रधारापातेन रोदिति विपक्षवनिताचक्षुषा ददाति जलं स श्रेयान्नितरः न च स्वप्नदृष्टनष्टेष्विव क्षणिकेषु शरीरेषु बध्नन्ति बन्धुबुद्धिं प्रबुद्धाः स्थायिनि यशसि बान्धवधीराणां अनवरतप्रज्वलिततेजःप्रसरभास्वरस्वभावञ्च मणिप्रदीपमिव कलुषकज्जलमलेन न स्पृशत्येवातितेजस्विनं शोकः स त्वं सत्ववतामग्रणीर्योऽग्रसरः प्रज्ञावतां प्रथमः समर्थानां पृष्ठोऽभिमानानां आदिरसहिष्णूनां एताश्च सन्ततसन्निहितधूमायमानकोपाग्नयः सुलभासिधारातोयतृष्णयो विकटबाहुवनच्छायोपगूढवीरताया निवासशिबिरभूमयः स्वायत्ताः सुभटानामुरःकवाटभित्तयः यतः किं गौडाधिपेनैकेन तथा कुरु यथा नान्योऽपि कश्चिदाचरत्येवं भूयः सर्वोर्वीश्रद्धाकामुकानामलीकविजिगीषूणां सञ्चारय चामरमारुतान्तःपुरपुरन्ध्रीनिश्वसितैः छिन्धि रुधिरगन्धान्धमटप्रमण्डलाच्छादनैः छत्रचयान् व्यसनानि अपाकुरु कटुशोणितोदकस्वेदैः कुलक्ष्मीकुलटाकटाक्षचञ्चूरागोरगान् उपशमय निशितशरशिराव्य-

यशोशोणितव्ययैरकार्यशौर्यान्धान् उन्मूलय लौहनिगडामपि मालां विविधैः पादपीठदोहलदुर्ललितपादमघानि क्षपय तीक्ष्णाशास्त्रधारपातैर्जयशब्दश्रवणकर्णकण्डूरपनय चरणनखमरीचिचन्दनचर्चाललाटलेपैर्नमनस्तिमितमस्तकस्य विकारानुद्धर करदानसन्दंशै र्विषादर्पोष्मायमाणदुःशीलशल्यानि भिन्द्धि मणिपादपीठदीधितिदीप्रप्रदीपिकाभिश्शुष्कसुभटसाटोपभ्रूकुटिबन्धान्धकारान्विकारान् मार्जय चरणपतनलङ्घनलाघवगलितशिरोगौरवारोग्यैर्मिथ्याभिमानमौनमहासन्निपातान् मन्दय सततसेवनाञ्जलिषु मुकुलितकरसंपुटोष्मभिरिष्वासनगुणकिणे कार्कश्यनियमेनैव च ते गतः पिता पितामहः प्रपितामहो वा तमेव महासिस्त्रिभुवनस्पृहणीयं पन्थानमपहाय कुपुरुषोचितां शुचं प्रतिपद्यस्व कुलक्रमागतां केसरीव कुरङ्गीं राजलक्ष्मीं देव! देवभूयङ्गते नरेन्द्रे दुष्टगौडभुजगदष्टजीविते राज्यवर्धने प्रवृत्तेऽस्मिन्महाप्रलये धरणीधारायाधुना त्वं शेषः समाश्वासयाशरणाः प्रजाः क्ष्मापतीनां शिरःसु शरत्सवितेव ललाटन्तपान् प्रयच्छ पादन्यासान् अहितानामभिनवसेवादीनादुःखतप्तश्वासमण्डलैर्नखपङ्क्तैः प्रचालितचूडामणिचक्रबालबालातपैश्चयाकल्मषपादताम् ।

अपिच हतेऽपि तथैकाकी तपस्वी वनमृगैः सह सम्वर्धितसहजब्राह्मण्यमार्दवसुकुमारमनाः कृतनिश्चयश्चण्डचापं नाटनिटङ्कारनादनिर्मदीकृतदिग्गजं गुञ्जज्ज्यारवजनितजगज्जित्वरं समग्रमुद्यतमेकविंशतिकृत्वः कृतवान्राजन्यकं रामः किं पुनर्नैसर्गिकक्षायकार्कश्यः कुलिशायमानमांसो मानिनां मूर्धन्यो देवः तदद्यैव कृतप्रतिज्ञो गृहाण गौडाधिपस्वस्तये

जीवितसङ्कलनाकुलकालाकाण्डदण्डयात्राभिषेके ध्वजबन्धनं नह्यरातिरक्तचर्चाशिशिरोपचारमन्तरेण शाम्यति परिभवानलपच्यमानस्य देहस्य दुःखदाहज्वरः सुदारुणानीकारासन्तापशान्त्युपायपरिक्षये हिडिम्बामुखचुम्बस्वादितमिव रिपुरुधिरास्रुतं मन्दरोपायमपायि पवनात्मजेन जामदग्न्येन चाशाम्यमन्युशिखिशिखासङ्कुरेण सुखायमानस्पर्शशीतलेषु क्षत्रियक्षतजमहाह्रदेष्वास्नायीत्युक्त्वा व्यरंसीत्।

देवस्तु हर्षस्तं प्रत्यवादीत् करणीयमेवेदं मान्येनाभिहितं। तथाहि मे गृहीतभुवि भोगिनाथेऽपि दायादहृष्टिरीर्ष्यालोर्भुजस्य उपरि गच्छतीच्छति ग्रहाय गृहगणेऽपि भ्रूलता चलितुमनमत्सु शैलेष्वपि तं ग्रहमपि लषति दातुं करः तेजो दुर्दग्धानर्ककरानपि चामराणि ग्राहयितुमीहते हृदयं राजशब्दरुषः मृगराजानामपि शिरांसि वाञ्छति पादः पादपीठं कर्तुं स्वच्छन्दलोकपालस्वेच्छागृहीतानामाक्षेपादेशाय दिशामपि स्फुरत्यधरः किं पुनरीदृशे दुर्य्याने जातेऽमर्षनिर्भरे मनसि नास्त्येवावकाशः शोकक्रिया करणस्य।

अपिच हृदयमुपशल्ये मुसल्ये जगद्गर्भिते गौडचण्डाले जिह्मेषि शुष्काधरपुटपोटे इव प्रतीकारे शून्यः शुचाशूल्कर्तुं अकृतरिपुबलावलाऽविलोचनो दुर्दिनस्य मे कुतः करयुगलस्य जलाञ्जलिदानं अदृष्टगौडाधमचिताधूममण्डलस्य वा चक्षुषः स्वल्पमप्यम्बुसलिलं श्रूयताञ्च मे प्रतिज्ञा शपायार्यस्य पादपांसुस्पर्शेन यदि परिगणितैरेव वासरैः सकलचापचापलदुर्ललितनरनरपतिचरणरणरणायमाननिगडान् निर्गौडान्नकरोमि ततस्तनून-

पाति पीतसर्पिषि पतङ्गइव पातकी पातयाम्यात्मानमित्युक्त्वा च महासन्धिविग्रहाधिकृतमावन्तिकमन्तिकः समादिदेश ।

लिख्यतां रविरथचक्रचारुकारिचलनचारणमिथुनमुच्यमानोदयाचलात् त्रिकूटकूटकुट्टाटङ्कलिखितकाकुत्स्थलङ्कालुण्ठनव्यतिकरादासुवेलाद्वारुणीमदस्खलितवरुणपुरवारनारीनूपुररवमुखरितकुहरकुबेरस्यगिरेरागुह्यकगेहिनीनिधुवनपरिमलगन्धिगन्धपाषाणगुहागृहाच्च गन्धमादनात्सर्वेषां राज्ञां शासनं सज्जीक्रियन्तां कराः करदानाय शस्त्रग्रहणाय वा गृह्यन्तां दिशश्चामराणि वा नमयन्ति शिरांसि धनूंषि वा कर्णपूरीक्रियतामाज्ञा मौर्वी वा शिरसः शेखरीभवन्तु पादरजांसि शिरःसहस्राणि वा घटयन्तामञ्जलयः करिघटा वा बान्धवा वा लुप्यन्तामिषवो भूमयो मा संलम्बन्तां वेत्रयष्टयः कुन्तयष्टयो वा सुहृदः क्रियतामात्मा मच्चरणनखेष्वसिदर्पणेषु वा परागतोऽहं पङ्क्तेरिव मे निर्वृतिः कुतस्तावद्यावदकृतसर्वद्वीपान्तरसञ्चारविकलनरपतिमुकुटमणिशिलालोकमयः पादलेप इति कृतनिश्चयश्च विमुक्तास्थानो विसर्जितराजलोकान्तामारम्भकाङ्क्षिसभामभाङ्क्षीत् ।

उत्थाय च स्वप्नवन्निःशेषमाह्निकमकार्षीत् अगलच्च दर्पप्रसरइव श्रुतप्रतिज्ञस्य शाम्यदुष्मा दिवसस्त्रिभुवनस्य ।

ततश्च निजाधिकारापहारभीतइव भगवत्यपि क्वापि गते गततेजसि तिग्मतेजसि तामरसेष्वपि गूढशिलामुखालापेषु त्रासादिव सङ्कुचत्सु विहङ्गकगणेष्वपि समुपसंहृतनिजपक्षविक्षेपविकारनिश्चलेषु भियेव मूकीभवत्सु भुवनव्यापिनी सन्ध्या प्रतिज्ञामिव मानयन्ती नतशिरसि

घटिताञ्जलिवने सकलजने स्वपदच्युतिचकितदिक्पालदी-यमानाञ्जलिरिक्तलोहप्राकारवलयकलितास्विव बहलतिमिर-मालातिरोधीयमानासु दिक्षु दोषास्थानेनातिचिरं स्थित्वा नमन्नृपलोकलोलांशुकपवननर्मितशिखैर्दीपिकाचक्रवालैरपि प्रणम्यमानइव प्राड्विपाकोल्लोकं प्रतिषिद्धपरिजनप्रवेशश्च शयन-गृहं प्राविशत् उत्तानशयितश्च मुमोच अङ्गानि शयनतले द्वीप-द्वितीयौ तु अहिमकर इव लब्धान्तरस्तरसो भ्रातृशोको जग्राह।

जीवन्तमिव हृदये निमीलितलोचनो ददर्शाग्रजं उपर्युपरि भ्रातृजीवनान्वेषणा एव व्यसुखुर्वन्निश्वासाः धवलांशुपटान्तेनाश्रुजलप्लवेन मुखमाच्छाद्याचिरं करोद चकार च चेतसि कथं नामाकृतेस्तादृशो युक्तः परिणामोऽयमीदृशः पृथुशिलासङ्घातकर्कशकायबन्धात्तातादचलादिव लोहधातुः कठिनतर आसीदार्यः कोऽयुवास्य नृशंसहृदयस्यार्यविरहे सक्त-दपि युक्तं श्वसितं इयं सा प्रीतिर्भक्तिरनुवृत्तिर्वा बालिशोऽपि कः सम्भावयेदार्यमरणे मज्जीवितं तादृशमैक्यमेकपदएव क्वापि गतं अयत्नेनैव हतविधिना पृथक्कृतोऽस्मि दग्धरोषान्त-रितशुचा सुचिरं रुदितमपि न कृतं मुक्तकण्ठमकृतज्ञेन मया सर्वथा लूतातन्तुच्छायाच्छिदुरास्तुच्छा याः प्रीतयः प्राणिनां लोकयात्रामात्रनिबन्धना बान्धवता यतोऽहमपि नामापरइवा-र्येऽपि स्वस्थे स्वस्थवदासे।

अपिच किं दैवहतकेन फलमासादितमीदृशः परस्पर-प्रीतिबन्धः हृदये सुखभाजि भ्रातृमिथुने विघटिते यएव चन्द्र-मया इव हृदयाह्लादिनो लोकान्तरितस्य लग्नाश्चिताग्नय इवार्यस्य तएव भृशं दहन्ति गुणाः इत्येतानि चान्यानि हृद-

येन पर्यदेवत प्रभातायां च क्षपायां प्रातरेव प्रतीहारमादि-
देश अशेषजगत्साधनाधिकृतं स्कन्दगुप्तं द्रष्टुमिच्छामि ।

अथ युगपत्प्रधावितबहुपुरुषपरम्पराहूयमानं स्वम-
न्दिरादप्रतिपालितकरेणुकाचरणाभ्यामेव ससम्भ्रमन्दण्डिभि-
रुत्सार्यमाणजनपदः पदे पदे प्रणमतः प्रतिदिनमिभभिष-
ग्वरान् वारणां विभावरीवार्ताः प्रच्छन्नोत्क्षिप्तशिखिपिच्छला-
ञ्छितवंशलतागहनमटहीतदिगायामैर्वीथ्यवनैरिव वारणबन्ध-
विमर्दोद्वेगागतैः पुरः प्रधावद्भिरायुक्तमण्डलैरायोधगणैश्च
प्रातरङ्कीकृतां वासयष्टिं दर्शयद्भिर्नवमटहपतींश्च प्रार्थयमा-
नैर्लब्धाभिमतमत्तमातङ्गमुदितमानसैश्च सुदूरमपसृत्य नमस्य-
द्भिरात्मीयमातङ्गमहागमांश्च निवेदयद्भिर्डिण्डिमारोहणाय
च विज्ञापयद्भिरचरैश्च लब्धान्तरैश्च प्रमादापतितापराया-
हृतद्विरददुःखदृतदीर्घश्मश्रुभिरग्रत स्तुच्छद्भिरभिनवोपस्थ-
तैश्च कर्पटीभिर्वारणार्पणप्रत्याशया सेवमानैर्गणिकाधिका-
रगणैश्च लब्धान्तरैरुत्थितकर्मणः करेणुकाकल्पैरुल्लासित-
पल्लूचिह्नाभिररण्यपालपङ्क्तिभि र्निष्पादितनवमटहनागनि-
वहनिवेदनोद्यताभिरुत्तम्भिततुङ्गवेत्रलताभिश्च महामात्र-
पेटकैश्च प्रकटितकरिकर्मचर्मपुटैरभिनवगजसाधनसञ्चारण-
वार्तानिवेदनविसर्जितैश्च नागवीथीपालदूतवृन्दैः प्रतिक्षणं
प्रत्यवेक्षितकरिकवजकूटैश्च कटभङ्गसङ्कुलं ग्रामनगरनिगमेषु
निवेदयद्भिः कादम्बकदम्बैः क्रियमाणकोलाहलस्वामिप्रसाद-
संभृतेन महाधिकाराविष्करणेन स्वाभाविकेनावष्टम्भाभोगेन
उदासीनो व्यादिशन्निवासङ्ख्याकर्णाग्रङ्कसम्पर्कसम्पादनाय समुद्रा-
नाज्ञापयन्निव शृङ्गारगैरिकपङ्काङ्गरागसंग्रहाय गिरि-

ष्यान्निव दिग्गजाधिकारं ककुभामैरावत मपि हरन्निव हरे-
र्हरपदनमितकैलासगिरिप्रपातगुरुभिः पदन्यासैर्गुरुभारव-
हनगर्वमुर्व्याः संहरन्निव गतिविवशविलोलस्याजानुलम्बस्य
बाहुदण्डद्वयस्य विक्षेपैरालानशिलास्तम्भमालामिवोभयतोनि-
खनन्नीषदुत्तुङ्गलम्बिनाधरबिम्बेनातिरसस्वादुना नवपल्लवकोम-
लेन लक्ष्मीकरेणुकां विलोभयन्निव निजवंशदीर्घन्नासावंशं
दधानः स्निग्धमधुरधवलविशालतया पीतक्षीरोदेनेव पिब-
न्निवेक्षणयुगलेन दिशामायामं मेरुतटादपि विपुलालिकः
सततमविच्छिन्नच्छायाप्ररूढवशादिव नितान्तायतनीलको-
मलच्छविसुभगेन स्वभावभङ्गुरकुन्तलीभारवल्लीवेल्लितवि-
लासितां लुनन्निव लुप्तावलोकानर्ककरान् वर्वरक्षेपिणारिपक्ष-
परिक्षयसत्येन कार्मुककर्मापि सकलदिगन्तश्रूयमाणगुरु-
गुणध्वनीत्यस्य मत्तमातङ्गसाधनोऽप्यसृष्टोमदेन भूतिमानपि
स्नेहमयः पार्थिवोऽपि गुणमयः करिणामिव दानवतामुपरि-
स्थितं स्वामितामिव स्पृहणीयां भृत्यतामप्यपरिभूतामुद्वहन्नेक-
भर्तृभक्तिनिश्चलां कुलाङ्गनामिवानन्यागम्यां प्रभुप्रसादभूमि-
मारूढोनिष्कारणबान्धवो विदग्धानामभृतभृत्यो भक्तानाम-
क्रीतदासोविदुषां स्कन्धगुप्तोविवेश राजकुलम्।

दूरादेव करकमलावलम्बितं स्वमौलिना महीतल-
नमस्कार मकरोत् उपविष्टञ्च नातिदूरे तं जगाद दूरे-
हर्षः श्रुतविस्तरएवास्यार्यव्यतिकरस्यास्मच्चिकीर्षितस्य च
यतः शीघ्रं प्रवेश्यन्तां प्रचारदिगन्तगतानि सर्वगजसाधनानि
न क्षमते स्वल्पमप्यार्यपरीवेषपीड़ापावकः प्रयाणपरि-

सत्यमित्येवमभिहितश्च प्रणम्य व्यज्ञापयत् ज्ञातमवधारयतु स्वामिसमादिष्टं किन्तु विज्ञाप्यमस्ति भर्तृभक्त्यैव तदाकर्णयतु देवः देवेन पुष्पभूतिवंशप्रभवस्याभिजनस्य तेजसो दिक्चक्रविक्रमप्रलम्बस्य बाहुदण्डयुगलस्यासाधारणस्य सोदर्यस्नेहस्य च सर्वमनुरूपमुपक्रान्तं काकोदराभिधानाः कृपाणाः क्षुद्रयोऽपि न सह्यन्ते निकारं किमुत भवादृशास्तेजसां राशयः केवलं राज्यवर्धनादेवोदन्तेन कियदपि दृष्टमेव देवेन दुर्जनानां दौरात्म्यं ईदृशाः खलु लोकस्य स्वभावाः प्रतिग्रामं प्रतिनगरं प्रतिदिशं प्रतिद्वीपं प्रतिदेशञ्च भिन्ना वेषाश्चाचाराश्चाकाराश्चाहाराश्च जनपदानां तदीय मादेशोचिता स्वभावमृदुःसरलहृदयजा त्यज्यतां सर्वविश्वासिता प्रमाददोषाभिषङ्गेषु श्रुतबहुवार्त एवदेवः यथा नागकुलजन्मनः शारिकाश्रावितमन्त्रस्यासीन्नाशोनागसेनस्य पद्मावत्यां शुकश्रुतरहस्यस्य श्रीरशीर्यत श्रुतवर्मणः श्रावस्त्यां तत्स्वप्नायमानस्य च मन्त्रभेदोऽभून्मृत्यवे माहतएव तस्य सुवर्णचूडस्य चूडामणिलग्नलेखप्रतिबिम्बिताक्षरा च चामरग्राहिणीयमलाय यौवनेश्वरस्य लोहबहुलश्च बहुलनिधिनिधान मुत्खनन्त मुत्खातखड्गप्रभवमायिनीं मायमधुरां बृहद्रथं विदुरथ वरूथिनी नागवनविहारस्य मायामातङ्गनिर्गतामहासेनसैनिकावत्सपतिं यियासिषुः अतिदयितलास्यस्य शैलुषमध्यमध्यास्य मूर्धानमसिलतया मृणालमिवालुनादग्निमित्रात्मजस्य सुमित्रस्य मूलं देवः ।

प्रियतन्त्रीवायस्य बालवीणाभ्यन्तरसुषिरीनिहितनिशिततरवारियोगं छद्मना चिच्छेदुः रश्मकेश्वरस्य शरभस्य शिरोरिपुपुरुषाः प्रजादुर्बलञ्च बलदर्शनव्यपदेशदर्शिताशेषसैन्यः

सेनानीरनार्यो मौर्यं बृहद्रथं पिपेष पुष्यमित्रः स्वामिनं आश्चर्य-कुतूहली च चण्डीपतिर्दण्डोपनतयवननिर्मितेन नभस्तलया-यिना च यन्त्रयानेनानीयत क्वापि काकवर्णः शैशुनागिश्च नग-रोपकण्ठे कण्ठे चकर्त निशितनिस्त्रिंशेनातिस्त्रीसङ्गमनपरवशं शौभममात्यो वसुदेवो देवभूतिं दासीं दुहिता देवीव्यञ्जनया विगतजीवितमकारयत् असुरविवरव्यसनिनश्चापजहार परि-मितरमणीमणिनूपुरझणझणाह्लादरम्यया मागधं गोवर्द्धन-गिरिसुरङ्गया स्वविषयं मेखलाधिपतिमन्त्रिणः महाकालमहे महामांसविक्रयवादपातलो वेतालस्तालजङ्घो नाम जघान जघन्यजं प्रद्योतस्य पौणिकं कुमारं कुमारसेनो रसायनरसाभिनिवेशिनश्च रसवैद्यव्यञ्जनः सुबहुपुरुषान्तरप्रकाशितौषधगुणो गणपति-र्विदेहराजस्य राजयक्ष्माणमजनयत् ।

स्त्रीविश्वासिनश्च महादेवीदृढभक्तिभाग्भूत्वा भ्राता भर्तृसेनस्याभवत्कालिङ्गस्य वीरसेनो हत्यवे मातृकुली तव-निषण्णस्य तनयोऽन्यं तनयमभिषेक्तुकामस्य वज्रप्रभवस्य हत्यवे भूरुशाधिपतेः उत्सारणादचिन्त्य रहसि सचिवमेव शूद्रक-दूतो दूरीचकार चकोरनाथं चन्द्रकेतुं जीवितात् मृग-यामत्तस्य च मथनतो गण्डकानुहृण्डनस्तनमनिलीनाश्चम्पाधि-पनरपतय स्वामुण्डीपतेराचेमुः प्राणान् पुष्करस्य वन्दी-रागपरवशं च परप्रयुक्तां जयशब्दमुखरमुखां मूर्खमौख-रीं च्छेत्रवर्माणमुदखनत् नलिनपरे च परकलत्रकामुकं का-मिनीवेषगुप्तो गुप्तश्चन्द्रगुप्तं शकपतिमशातयदिति प्रमत्तानाश्च प्रमदाकृताश्च श्रुतिविषयमागता एव देवस्य यथा मदिरोन्मा-दितं मधुरमलिप्तैर्लाजैः सुव्रताजघनस्वपुत्रराज्यार्थं महासेनं

काशिराजं जारजनितकन्दर्पदर्पा चक्षुरधारापर्यन्तेनायोध्याधिपतिं परन्तपं रत्नावतीजातोऽलुनात् विषचूर्णचुम्बितमकरन्देन च कर्णेन्दीवरेण देवरानुरक्ता देवकी देवसेन सौह्म्यं योगपरागवीवर्धिणा च मणिनूपुरेण वल्लभा सपत्नीकृष्णा वैराज्यमवन्तिदेवं वेणो गूढेन चास्त्रेण विन्दुमतीं वृष्णीं विन्धुरथं रसदिग्धमध्येन च मेखलामणिना हंसवती सौवीरं वीरसेनं अष्ट्यागदलिप्तवदना च विषवारुणीगण्डूषवायनेन पौरवी पादनेश्वरं सोमकमित्युक्त्वा विरराम।

स्वाम्यादेशसम्पादनाय निर्जगाम देवोऽपि हर्षः सकलराज्यस्थितिश्चकार ततो यथाश्रुतमतिस्ते प्रियाप्यं विजयाय दिशामादितुमति देवे हर्षे गतायुषां प्रतिसमतानामुद्वसितेषु बहुधाप्युपलिङ्गानि वितेनिरे तथाहि।

अविप्रकृष्टकालदूतहृष्टयइव इतस्ततश्चटुलाः कृष्णसारपङ्क्तयः प्रचलितलक्ष्मीनूपुरप्रमादप्रतिमामधुसरघासङ्घात भङ्कारा जह्लादिरे विटत्तविक्षतवदनविवरविसृतवह्निविसरा वासरे विविश्वरं विरेसुरुपशिविरं शिवाः शवविशितप्ररूढप्रणया इव कपिपोतकपोलकपिलपक्षतयः काननकपोताः पेतुः आमन्त्रयमाणा इव दूरकालकुसुमानि सम मुपवनतरवः खरलकरतलप्रहारप्रहतपयोधरा रुरुदुः प्रसभं सौधसालभञ्जिकाः ददृशुरासन्नकचग्रहभयोद्भ्रान्तोत्तमाङ्गमिवात्मानं कबन्धमादर्शोदरेषु चूडामणिषु चक्रशङ्खकमललक्ष्माणः प्रादुरभवन् पादन्यासा राजमहिषीणां चेटीनाञ्च चामराणि सकस्मादेवाधावन्त पाणिपल्लवात् प्रणयकलहेऽप्यदत्तपृष्ठाश्चिरमभवन् भटाः पराङ्मुखा मानिनीनां करिणीकपो-

लेषु मधुविभ्रममघटयन्त मदिरापानगोष्ठ्यः समाघ्रातयममहिष-गन्धरूपताद्यन्त सम्भ्रमकरमपि वनं हरयोहरितं सञ्चेरुः चलवल-यावलिवाचालबालिकाबाहुलतातरलिकातोद्यलालिता अपि-ननृतुर्न मन्दिरमयूराः निशि निशि रजनिकरहरिणनिहितन-यनद्दवोन्मुखस्तार मुपतोरणमकरणादराणीव कौलेयकगणाः गणयन्तीव गतायुष स्तर्ज्जनतरलया तर्जन्या दिवसमाकटकेषु कोट्टविकुट्टिमेषु कुटिलहरिखुरवेणीतरङ्गिण्यइव तुणाजयोऽजा-यन्त अजनितवेणीबन्धानि निरञ्जनलोचनरुचीनि चषकम-धूनि मुखकमलप्रतिबिम्बान्यदृश्यन्त सुभटीनां आरान्नालमाहार-चकिताइव चकम्पिरे भूमयः बध्यालङ्काररक्तचन्दनरसच्छटा इवालक्ष्यन्त पतिताः शूराणां शरीरेषु विसितबन्धबन्धूककुसु-मशोणरोचिषः पेतुः शोणितवृष्टयः पर्यग्नीकुर्वाणा इव विन-श्वरीं श्रियमविरलस्फुरत्स्फुलिङ्गदग्धतारागणाः गणशोऽपतन्त प्रज्वलिता नव्यरंसीषुरुल्कादण्डाः प्रथममेवहि प्रतिहारी-वापहरन्ती प्रतिभवनं चामरातपत्रव्यजनानि पुरुषा बभ्राम वात्येति ।

इति श्रीहर्षचरिते राजप्रतिज्ञा नाम षष्ठोच्छ्वासः ।

---

# सप्तमोच्छ्वासः ।

अङ्गणवेदी वसुधा कुल्या जलधिस्थलीव पातालम् ।
वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य पुरुषस्य ॥ १ ॥
धृतधनुषि शौर्यशालिनि शैला न नमन्ति यत्तदाश्चर्यम् ।
रिपुसंज्ञकेषु गणना कैव वराकेषु काकेषु ॥ २ ॥

अथ व्यतीतेषु कतिपयेषु दिवसेषु मौहूर्तिकमण्डलेन शतशः परिगणिते प्रशस्तेऽहनि दत्ते चतसृणामपि दिशां विजययोग्ये दण्डयात्रालग्ने सलिलमोचविशारदैः शारदैरिवाम्बुदैः विचित्रैर्धौतैः कलधौतैः शातकुम्भैः कुम्भैश्च स्नात्वा विरचय्य भगवतो नीललोहितस्यार्चां सुदर्चितं कृत्वा प्रदक्षिणावर्तशिखाकलापकलितमसितवर्त्मानं नन्दयित्वा द्विजेभ्यो रत्नवन्ति राजतानि जातरूपमयानि च सहस्रशः तिलपात्राणि कनकलतापत्रकृतालङ्कृतशफशृङ्गशिखरा गाश्चादात् समुपविश्य विततव्याघ्रचर्मणि भद्रासने विलिप्य प्रथमं विलिप्य प्रथमविलिप्तायुधो विजयाय धवलेन चारुणा चन्दनेन परिधाय राजहंसलक्ष्मीसदृशे दुकूले परमेश्वरचिह्नभूतां शशिकलामिव कल्पयित्वा सितकुसुममुण्डमालां शिरसि नीत्वा कर्णाभरणमरकतमयूखमिव कर्णगोचरतां गोरोचनाच्छुरितमभिनवदूर्वापल्लवं विन्यस्य सह भूषासनवलयेन गमनमङ्गल-

प्रतिसरं प्रकोष्ठे सन्धाय परिपूजितप्रहृष्टपूतपुरोहितकरविकी-र्य्यमाणशान्तिसलिलशीकराभ्युक्षितशिराः संप्रेष्य महार्हाणि वाहनानि बहलरत्नालोकलिप्तककुभि भूषणानि च भूभुजां संविभज्य क्लिष्टकार्पटिककुलपुत्रलोकमुचितैः प्रसाददानैरुन्मुच्य सर्वबन्धनानि नियुज्य तत्कालस्फुरितेन कथितात्मानमिवाष्टादशद्वीपजेतव्याधिकारे दक्षिणं भुजस्तम्भमहमहमिकया खैरिव सुनिमित्तैरपि समग्रैरग्रतोगच्छद्भिः प्रमुदितः प्रजाजन्यमानजयशब्दकोलाहलो हिरण्यगर्भ इव ब्रह्माण्डात्कृतयुगकरणाय भवनान्निर्जगाम नरपतिः।

नातिदूरे च नगरादुपसरस्वतीनिर्मिते महति तीर्थे समुत्तम्भिततुङ्गतोरणवेदिनिहितनवपल्लवलाम्रहेमकलशे बद्धवन्दनमालादाम्नि धवलध्वजमालिनि भ्रमद्धूपवासिनि पठद्द्विजन्मनि मन्दिरे प्रस्थानमङ्गलावस्थानमकरोत्।

तत्रस्थस्यास्य ग्रामाक्षपटलिकः सकलकरणपरिकरः करोतु देवो दिवसग्रहणमद्यैवाव्ययशासनः शासनानामित्यभिधाय वृषाङ्कामभिनवघटितां हाटकमयीं मुद्रामुपनिन्ये।

जग्राह तां राजा समं स्थापिते च प्रथममेव मृत्पिण्डे परिभ्रश्य करस्थलादधोमुखं महीतले पपात सा मुद्रा मन्दाश्यानपङ्कपटले बहुमति सरस्वतीतीरे परिस्फुटं राजयोऽव्यज्यन्त वर्णानाम्। अमङ्गलाशङ्किनि विषीदति परिजने नरपतिरकरोन्मनसि अतत्त्वदर्शिन्यो भवन्त्यविदग्धानां धियः तथा हि एकशासनमुद्राङ्का भवतो भूर्भविष्यतीति निवेदितमपि निमित्तेन अन्यथा गृह्णन्ति ग्राम्याः इत्यभिनन्द्य-

मनसा महानिमित्तं ततः सीरसहस्रसम्मितसीमानां ग्रामाणां शतमदाद्द्विजेभ्यः निनाय च तत्र तं दिवसं प्रतिपन्नायां च शर्वर्यां सम्मानितसर्वराजलोकः सुष्वाप ।

अथ गलति तृतीये यामे सुप्तसकलसत्त्वनिःशब्दे दिक्कुञ्जरगुहामार्जनाजृम्भमाणगम्भीरध्वनिरताड्यत प्रयाणपटहः स्थित्वा मुहूर्तमिव पुनः प्रयाणक्रोशसङ्ख्याख्यापकाः स्पष्टमवाद्यन्त प्रहाराः पटहे पटीयांसः ततो रटत्पटहे नदन्नान्दीके कुजद्गुञ्जे कणत्काहले शब्दायमानशङ्खे क्रमेणोपचीयमानकलकले परिजनोत्थापनव्यग्रसमग्रगृहव्यवहारिणि द्रुतदूतघट्टनाघातघट्ट्यमानगण्डिकाकुलकोलाहलकलितककुभि बलाधिकृतबोध्यमानपाटिकपेटिके ज्वलनज्वलितोल्कासहस्रालोकलुप्यमानत्रियामातमसि यामचेटीचरणचालनोत्थाप्यमानकामिमिथुनके कञ्चुकिनिर्देशनश्यन्निद्रोन्मीषविषादिनि प्रबुद्धहास्तिकशून्यीक्रियमाणशय्यावटे सुप्तोत्थिताश्वीयधूयमानसटे रटत्कटकमुखखनित्रखन्यमानवीथीपाशे समुत्कीलमानकीलीशिञ्जानभिञ्जरे उत्पाट्यमाननिगडताररवोत्तालतरङ्गरङ्गमाणाश्वखुरपुटे लोभकमुच्यमानमदस्यन्दिदन्तिसन्तानशृङ्खलाखनखननिनादिनि निर्भरभरितदशदिशि शिवासपूलीप्रहारप्रमृष्टपांसुलकरिपृष्ठप्रसार्यमाणप्रस्फोटितचर्मणि गृहचिन्तचपेटकसंवेष्ट्यमानपटकुटिकाण्डपटमण्डपपरिवस्त्रवितानके किलकलापपूर्य्यमाणचिपिटचर्मपुटे सभाण्डीयमानभाण्डागारिणि भाण्डागारवहनवाह्यमानबङ्कबलिवाहके निषादिनिश्चलानेकानेकपारोप्यमाणकोशकलशपेटापीडसङ्कटायमानसामन्तसिन्दूरगतदन्दाशेर-

क्वचिदर्प्यमाण उपकरणसम्भारभारीक्रियमाणदुष्टदन्तिनि
तीर्यानमज्जाघनिकक्रक्षोभाष्टलम्बमानपरतन्त्रतुन्दिलवन्दिज-
नितजनहासे पीड्यमानशारीशरवाविगुणगृहीतगात्रवि-
काररुष्टरुहदुन्मदकरिणि करिघटाघटमानघोणाटङ्कारक्रियमा-
णकर्णज्वरे पृष्ठप्रतिष्ठाप्यमानचण्डालककदर्थीकृतिकूजत्करभे
अभिजातराजपुत्रप्रेक्ष्यमाणाकुलपुत्रयुक्ताकुलकुलीनकुलपुत्रकल-
त्रवाहने गमनवेलाविलम्बशरणाधोरणान् वीक्ष्यमाणनवसेवके
प्रसाददत्तापत्तिनीयमाननरपतिवल्लभपरश्वाजिनि चारुवाह
सैन्यन्यस्यमाननासीरमण्डनाडम्बरस्थूलस्थासके स्थानपाल-
पार्यमाणलम्ब्यमानलवणसाधिकाकिङ्किणीनालिकासनाथस-
ङ्कलिततलसारके कुण्डलीकृताम्बरच्छिणि जालजटिलवल्लभ-
पालाश्वघटानिवेश्यमानशाखामृगे परिवर्द्धनक्षप्यमाणार्द्ध-
जग्धप्राभातिकयुग्याशनप्ररोहके व्याघ्रकोशीविजृम्भमाणघा-
सिकघोषे गमनसम्भ्रमभ्रष्टमदुत्तुण्डतरुणतुरङ्गतन्यमाना-
नेकमन्दुराविमर्दे सज्जीकृतकरेणुकारोहणाह्वानसत्वरसुन्दरी-
दीयमानमुखालेपने चलितमातङ्गतुरङ्गप्रधावितप्राकृतप्राति-
वेश्यलोकलुण्ठमाननिघासासुसञ्चये लसत्तैलचक्राक्रान्तचक्री-
वतीचक्रचीत्कारमुखरगन्त्रीगणगृह्यमाणगृहतवर्त्मनि अका-
ण्डोड्डीयमानभाण्डभरितासु हि निकटघासग्राहलुब्धल-
ब्धनप्रथमप्रसार्यमाणसारसौरभेये प्रमुखप्रवर्त्यमानमहासा-
मन्तपुरःप्रधावज्जवाहिनीप्रियपतोल्लापलभ्यमानसङ्कटकुटीरा-
न्तरालनिःसरणे करिचरणचलितमरुकोत्थितलोकलोष्टाहू-
न्यमानाधोरणक्रियमाणासन्नसाक्षिणि सङ्कटविघटमानव्याधप-
ल्लीपलायमानक्षुद्रकटकजालकलोपद्रवविद्रुतद्रविणबलीवर्दवि-

द्राघयद्भि पुरःसरदीपिकालोकलुप्यमानलोकोत्पीडसुप्त-
प्रस्थितान्तःपुरकरिणीकदम्बके हयारोहाहूयमानलम्बित-
भुजि सरभसचरणनिपतननिश्चलगमनमसुखायमानषड्गव-
नियच्छ्यमानटङ्कणे त्रस्यद्वेसरविसम्वादसीदद्वाणिज्यात्यसा-
दिनि रजोजग्धगतिस्पष्टे प्रयाणसमये प्रतिदिशमागच्छ-
द्भिर्गजवधूसमारूढैरधिकमाधोरणोद्गीयमाणहेमपत्रभङ्गशा-
रशार्ङ्गैरन्तरासमासीनान्तरङ्गस्फीताशिमिसाम्बूलीविधूयमान-
चामरपल्लवैः पश्चिमासननिक्षार्पितभस्त्राभरभिन्दिपालफलकैः
पत्रलताफलकैः पत्रलताकुटिलकलधौतमलकपल्लवितपर्याणैः
पर्याणपत्रपरिक्षेपितपट्टिकाबन्धनिश्चलपट्टोपधानस्थिरावस्थानैः
प्रचलपादपूलिकास्फालने स्फायमानपदबन्धमणिशिलाशब्दै-
रुचिरचित्रमेलसुकुमारस्थानस्थगितजङ्घाकाण्डैः कार्दमिक-
काषायवासितपिङ्गलविलिङ्गैश्चानीलमहणसक्तसमुत्पादितसि-
तसमायोगपरभागैश्चावदातदेहवर्णविराजमानराजावर्तपट्टमे-
चककञ्चुकैश्च व्याघ्रचीनचोलकैश्च नानामुक्तास्तवकितस्तबकवार-
वाणैर्नानाकषायकर्बुरकूर्पासकैश्च भृङ्गपिच्छच्छायाच्छादनैश्च
व्यायामोपलुप्तपार्श्वप्रदेशप्रविशच्चाबन्धप्रविभक्तित्रिकैश्च गति-
वशवेल्लितहारलतालग्नलोलकुण्डलोन्मोचनप्रधावितपरिजनैश्च
चामीकरपत्राङ्कुरकर्णपूरघट्टनवाचालबालपाशैश्च उष्णीष-
पट्टावष्टब्धकर्णोत्पलनालैश्च कुङ्कुमनागकोमलोत्तरीयान्तरितो-
त्तरसभैश्च चूडामणिबन्धखचितक्षौमवल्कलैश्च मायूरातपत्राय-
माणमेचरोड्डीयमानषट्पदपटलैश्च मार्गागतशारीरकशा-
रिवाहवेतण्डैश्च पुरश्चलच्चामरकिर्मीरकार्मरङ्गचर्ममण्डलो-
ड्डामरचटुलायमानचारभटभरितभुवनान्तरै रास्कन्दत-

काम्बोजवाजिव्रातघिञ्जानजातरूपायमानरवमुखरितदिङ्मुखैः निर्दयप्रहतलम्बापटहपटुरवबधिरीकृतश्रवणविवरैरुद्घुष्यमाणनामभिरभिमुखपादातप्रतिपाल्यमानाज्ञापातैः राजभिरापूरिते च उदिते भगवति दिनकृति राज्ञः समायोगग्रहणाध्वंसी सस्वान संनाहशङ्खो मुहुर्मुहुः।

अचिरादिव प्रथमचरण एव दिग्विजयाय दिग्गजसमाह्वानमिव गमनलोलकर्णतालदोलाविलासैः कुर्वाणया करेणुकया सिद्धयात्रयेव उह्यमानो वैदूर्यदण्डविकटनोपरिप्रत्युप्तपद्मरागखण्डमयूखखचिततया सूर्योदयदर्शनकोपादिव लोहितायमानेन ध्रियमाणेन मङ्गलातपत्रेण कदलीपत्रगर्भपत्राभ्यधिकस्निग्धिम्ना च नवनीतनिर्मितेन द्वितीयइव भोगिनामधिपतिरङ्गलग्नेन कञ्चुकेनामृतमथनदिवसइव क्षीरोदकेन पटलप्रतिविम्बमुदयमानं सवितारमपि पिबन्निव स्वतेजसा बहलताम्बूलरागसिन्दूरच्छुरितया विलम्बमानो द्वीपान्तराणि ओष्ठमुखमुद्रयानुरागस्य महाहंकारमरीचिचक्रवालानि चामराणीव दिशोग्राहयन् राजकेक्षणोत्क्षिप्तत्रिभागया त्रीन् लोकान् करदानायाज्ञापयन्निव सविभ्रमभ्रूलतया द्राघीयसा बाहुप्रकारेण परिक्षिपन्निव रिरक्षिषया सप्तापि सागरमहाखातान्यखिलमिव क्षीरोदमाधुर्यमादयोन्नतया लक्ष्म्या समगूढो गाढममृतमयइव पीयमानः कुतूहलोत्तानकटकलोचनसहस्रैः स्नेहार्द्रेषु राज्ञां हृदयेषु गुणगौरवेणेव मज्जन् मज्जानमपि लिम्पन्निव सौभाग्यद्रव्येण द्रष्टॄणाममरपतिरिवाग्रजाधवलकक्ष्याकुलः पृथुरिव पृथ्वी-

शो वनाधीनसङ्कल्पितसकलभूभृत्समुत्सारणाः पुरःसरैरालोककारकैः सहस्रसङ्ख्यैरकिङ्करैरिवाधिकारचातुर्यचञ्चलचटुलैर्व्यवस्थास्थापननिष्ठुरैर्भयपलाय मानलोकोत्पीडान्तरिता दिशोऽप्य देशं ग्राहयद्भिरिव विततकदलिकासम्पातप्रचारं पवनमपि विनये स्थापयद्भिरिव द्रुतचरणोद्भूतधूलीपटलावधूतान् दिनकरकिरणानपि उत्सादयद्भिरिव कनकवेत्रलतालोकविक्षिप्यमाणं दिनमपि दूरीकुर्वद्भिरिव दण्डिभिरितस्ततः समुत्सार्यमाणजनसमूहो निर्जगाम नरपतिः ।

अवनमति च विनयनमितवपुषि भयचकितमनसि चलनशिथिलमणिमुकुटनिकरपरिकररुचिरशिरसि विलुलितकुसुमशेखररजसि राजके प्रभामुचा चूडामणिना तिर्यक्कुञ्चन्तो मरीचिनिचयाश्चापराजयद्व सुशकुनसम्पादनाय चेन्द्रमेघायमानरेणुमेदुरं मन्दिरं मन्दिरशिखण्डिनः समुड्डीयमानाः कोमलकल्पपादपपल्लववन्दनमालाइवाबध्यन्त दिग्द्वारेषु दिक्पालैः प्रणम्यमानैश्च नेत्रत्रिभागैश्च कटाक्षैश्च समग्रैः स्मितैश्च भ्रूचलनैश्चार्धस्मितैश्च परिहासैश्च शोकालापैश्च कुशलप्रश्नैश्च प्रतिप्रणामैश्चाज्ञादानैश्च क्रीणयन्निव मानमयान् प्राणान् प्रणयदानैर्वीराणां वीरो यथानुरूपं विबभाज राजकम् ।

अथ प्रस्थिते रजनिकरकलत्रस्तदिङ्नागचीत्काररवद्रव इतस्ततस्तारतरतूर्याणान्तातान प्रतिध्वनिराशातटेषु आशागजेभ्यः परिकुपितानामिव निःसृतानां करिणां मदप्रस्रवणविधिभिरलिकुलकालीभिः कालिन्दीवेणिकासहस्राणीव सस्यन्दिरे सिन्दूररेणुराजिभिररुणमानबिम्बे रवाविवास्तमय-

माशशङ्किरे शकुनयः षट्पदकुलकोलाहलमांसलैः कर्णतालनिःस्वनैस्तिरोदधिरे दुन्दुभिध्वनयः दोधूयमानः सचराचरमाचचाम चामरसंघातो विश्वं श्रमीयश्वासविक्षिप्तैः शिशिरतेजःसिन्दुवारदामशुचिभिर्निरन्तरमन्तरिक्षं फेनपिण्डैः पिण्डिततनगरे स्तबकपाण्डुराणि वपुरिव परस्परं सङ्कटं नष्टा अपि दिशः समुच्चचाम करदण्डान्यातपत्रवनानि रजोनिमीलितोऽपि मणिमुकुटशिलाबालातपेन पुनरपि विचकास वासरः राजतैर्हिरण्मयैश्च मण्डनभाण्डमण्डलैर्ह्लादमानैर्हरीणामपह्नतापरिच्छादा हरितोबधिरतामिव दधुः अरिप्रतापानलनिर्मूलनाएव मदोष्णशीकरैः शरीरे करिणः ककुभां चक्रवालं चक्षुषामुन्मेषं मुमुषुस्ताड़ितस्यन्दितानीव चूड़ामणीनामर्चींषि स्वयमपि विसिष्मिये सम्पादसम्पततां बलानां भूपालः सर्वतो विक्षिप्तचक्षुरद्राक्षीदवस्थानात् प्रतिष्ठमानं स्कन्धावारमधोक्षजकुक्षेरिव युगादौ निष्पतन्तं जीवलोकमम्भोनिधिमिव कुम्भभुवोवदनात् प्लावितभुवनमभिनिष्पतन्तमर्जुनबाहुदण्डस्थापितमुक्तमिव सहस्रधा प्रवर्तमाननर्मदाप्रवाहं दूरत्वं भ्रातः किं विजृम्भसे लगति तुरङ्गकभट्टभग्नवारणादूव सञ्चरसि तिष्ठ यावदमी पुरःसराः सञ्चरन्ति सरभसमुपरि किमाह्वयसि वाङ्कमुष्टीः न पश्यति शुकशिशुकयानं वत्स ! रामिल ! रजसि यथात्मन्न पश्यसि लसति स तु प्रसेवकः किमेवं त्वरसे सौरभेय ! सरणिमपहाय हयमध्यं धावसि धीवर ! प्रविशसि मर्तुकामो मतङ्गमार्गे गलति तिरश्चीनाचरणकगोणीगणयति न मामरटन्तमवतटेनावतरसि सुखमामर्णाय सैरिणि भग्नसौवीरकुम्भ-

मन्दरक। खादिष्यसि गतरसानिवृतृणः प्रसारय कियच्चिरं चिनोषि चेट! वहराणि दूरं गन्तव्यं किमद्यैव विद्रासि द्रोणक! द्राघीयसी दण्डयात्रा विनैकेन निष्करणेन तिष्ठेय अस्माकं अग्रतः पन्थाः स्थपुटः स्थाणुरक! यथा न पीनां स्थालीं गण्डकच्छूलभारो न निर्वहति इति दामकमासीनादमुतो-द्रागगात्रेण सुखवासपुलकमलं हि को जानाति यव-सगतिं. गतान्धारय बलीवर्दान्वाहकरजितं चेतमिदं शा-कटिकविलम्बिता शकटी भाकरम्भुरि धवलं युङ्क्ष्व जवपाल-करग्रमदापि नङ्क्षु चीणि किं स्फुटिते हतहस्तिपकानेदी-यसि करिकरचण्डं समरमर्दने कर्दमे कर्दम! गलसि भ्रातर्भ-वसि विधुरे सिन्धुसुन्दरपङ्कादनड्वाहं दूत एहि! माणवक! मेघेनेभघटाघट्टसङ्कटेनासि निःसरणः सरणिरित्यादि प्रवर्त-मानानेकसंलापः क्वचित् स्वेच्छाविदितोद्दामसस्यघासविषम-सुखसम्पन्नाम्रपुष्टैः केलीकोकिलैः किलिकिलायमानैः मेमस्ठ-घस्ठवठलम्बनखेभिककुट्टाकलुण्ठकचेटकवाटकचण्डालमण्डलै-रन्धिरैस्तूयस्तूयमानं क्वचिदन्नसहाये क्वापि ग्रार्दितकुग्रामटीका-कुटीमभिसम्पादितसीदत्सौरभेयशम्बलहंसवाहनायासयोगाम-तसम्वेगैः स्वयं गृहीतगृहोपकरणैरियमेका कथञ्चित् दण्ड-यात्रा तु यातु पातालतलं विधाभूतैरभवं निर्भवतु श्रिवं सेवा करोतु स्वस्ति सर्वदुःखकूटाय कटकायेति।

दुर्विधकुलपुत्रै निन्द्यमानं क्वचिदतितीक्ष्णसलिलस्रोतःपाति-नौगतैरिव परिक्लूप्तैरतिद्रुतं वहद्भिः कृष्णकठिनस्कन्धकूटगत-पुरगण्डकैर्गृहीतसौवर्णपादपीठपीठिकापर्यङ्ककनककलशाय-तद्ग्रहावगाढैः प्रत्यासन्नपार्थिवोपकरणग्रहणगर्वदुर्वारैः सर्वञ्चैव

वद्भिष्कुर्वद्‌तिभृतकभारकैर्मैस्थानसोपकरणग्राहिभिर्वद्धवराश्व-ह्वाणसे लम्बमानहरिणचुकचडकजूटकजाम्भलैः शुष्कशश-शाकपलवेताम्नसंग्राहिभिः शुक्लकर्पटप्राभृतमुखैकदेशदत्ता-र्द्रमुक्तागुप्तगोरसभाण्डैस्तलकतपकहस्तिकतापिकाताम्रचरुक-टाहसंकटविकटपिटकभारकैः समुत्सार्यमाणपुरोवर्तिजनं क-चित् कोशोऽस्माकमुपरि फलकालेऽन्यएव विटाः समुपस्थास्य-न्तीति मुखरैः पदे पदे पततां दुर्बलबलीवर्दैनानियुक्तैः खट-चेटकैः कटुकैः खेद्यमानसंविभक्तभोगिपुत्रलोकं कचिन्नरपति दर्शनकुतूहलादुभयतः प्रधाविते मार्गगामिभिर्गमितैराग्रहा-रिकजनैः पुरसःरजरंमहत्तरोत्तम्भिताम्भः कुम्भैरुपायनीकृत-दधिकुण्डकुड्डमकाण्डकैर्घनघटितचेटकः सरभससमुपसर्पद्भिः कुपितप्रचण्डदण्डिवेत्रवित्रासितविद्रुतैर्दूरगतैरस्खलद्भिरपि प-तद्भिरपि नरेन्द्रमुखदत्तदृष्टिं निरस्तोऽपि पूर्वभूपतिदोषानु-द्घोषयद्भिरतिक्रान्तायुक्तकायुक्तशतानि च शंसीभिः चिर-न्तनचेटापराधांश्चाभिदधानैर्व्यंग्यमानास्थसंस्थणमपरैरादि-ष्टपरिपालकपुरुषपरितुष्टैर्धर्मप्रत्यक्षोदेव इति स्तुतीरा-तन्वद्भिः परैर्लूयमाननिष्पन्नसस्यविकसितविषादैः देवशुचा स-कुटुम्बकैरेव निर्गतैः प्ररूढप्राणच्छेदपीडापरित्याजितभयैः क राजा कीदृशो राजा कस्य वा राजेति प्रारब्धनरनाथ निन्दं कचित् शशकैश्च पदे पदे प्रजविप्रचण्डदण्डपाणिपेटका-नवन्धैर्गरीयोगुडैरिव हन्यमानै रितस्ततः सञ्चरद्भिरपरै र्युगपत्परम्परातीतमहाजनहसाग्रस्थैस्तिलशो विलुप्यमानैक-जनजङ्घान्तरालनिसःरणकुशलिभिः कुटिलताव्यसितबक्र-शुभिः पतल्लोष्टलगुडकोणकुठारं किलकुद्दालखनित्रदात्रयष्टि-

भिरपि निःसरद्भिरायुधः पश्चात्प्रतकलकलमन्यत संघशश्च घासिकैर्बुधधूलीव्यसरधूसरवासजालजालक्षितजघनैश्च पुराणपर्याणैकदेशदोलायमानदात्रैश्च शीर्णोर्णाशकलशिफिलमलिनमल्लकूटैः प्रभुपसादीकृतपाटितपटच्चरचोलकैर्विमानैरुह्यमानैः धूलीपटलं क्वचिदेकान्तप्रवृत्ताश्ववारचक्रचर्व्यमाणागमिगोविग्रहं पङ्किलप्रदेशपूरणादेशाकुलसकललोकलूयमानतृणपुलकं क्वचित्तलवर्तिवेत्रिवेत्रविलास्यमानशाखिशिखरगतविकोशविवरादिन्नाम्रग्णं क्वचिद्दण्डपाशविवशवेष्ट्यमानग्रामाकृष्टकौलेयं क्वचिदन्योन्यविजयस्पर्द्धोद्धुरराजपुत्रबध्यमानवाजिसंघट्टपथितमित्यनेकवृत्तान्तया कौतूकजननं प्रलयजलधिमिव जगद्ग्रहणाय प्रवृत्तपातालमिव महाभोगिनां गुप्तये समुत्पादितं कैलासमिव परमेश्वरगुप्तये सृष्टं हृश्यमानसकलप्राणिसद्मयं चतुर्युगसर्गकोशमिव प्रजापतीनां क्लेशवद्दस्थापितपःकरणमिव कारणं कल्याणानामेवं च वीक्षमाणं कटकं जगाम।

आसनवर्तिनाश्च तत्रभवता मान्धात्रा प्रवर्तिताः पन्थानो दिग्विजयाय अप्रतिहतरंहसा रघुणा लघुनैव कालेनाकारि जगतः प्रसाधनैः शरद्वितीयं करदीचकार चक्रं क्रमागतभुजाभिजनधनुर्बलमदावलिप्तानां पार्थिवानां पाण्डुपाण्डवः सव्यसाचीचीनविषयमतिक्रम्य राजसूयसम्पदे क्रुद्धदूगन्धर्वधनुष्कोटिटङ्कारकूजत्कुञ्जं हेमकूटपर्व्वतं पराजैषम्।

सङ्कल्पान्तरितं तरस्व महिमा हिममध्यवर्तिनोऽपि भयाद्वाह बाहुबलनिर्वृतिकरङ्कातरः कौरवस्य किङ्कर इव कृतिद्रुमगतानि विजिगीषवः खलु पूर्वे येनाल्पएव भूभागे भूयांसोभगदत्त

दन्तवक्त्रक्राथकर्णकौरवशिशुपालसाल्वजरासन्धसिन्धुनाथप्रभृतयोऽभवन् भूपतयः सन्तुष्टो राजा युधिष्ठिरः यो ग्लहहत-समएव धनञ्जयजनितजगत्कम्पकं किंपुरुषाणां राज्यं अलसस्वखड़ाशोकः यो न प्राविशत् चमां जित्वापि स्त्रीराज्यं स्वकीयएवान्तरं तुषारगिरिगन्धमादनयोः उत्साहिनः किष्कुस्तुलुष्कुविषयाः प्रदेशाः पारसीकदेशाः शशपदं शक्रस्थानं घट्टमानप्रतीहारे पारियात्रे यात्रैव शिथिलाः शौर्यशुल्कसुलभो दक्षिणापथः दक्षिणार्णवकल्लोलानिलचलितचन्दनतमालसौरभसुन्दरीकृतदरीमन्दिरो दानार्द्रेन्द्रदीयसि लग्नएव महेन्द्रः इत्येवं प्रधनाघातकानालापान् पार्थिवसुतानां बाङ्गशालिनां शृण्वन्निवाससाद मन्दिरम्।

द्वारदेशे चोभयतः सबहुमानं भूलताभ्यां विसर्जितराजलोकः प्रविश्यावततार बाह्यास्थानमण्डपस्थापितमासनमाचक्राम अपास्तसमायोगश्च क्षणमिवाचष्ट ततः प्रतीहारः पृथ्वीपृष्ठप्रतिष्ठापितपाणिपल्लवो विज्ञापितवान् देव! प्राग्ज्योतिषेश्वरेण प्रहितो हंसवेगो नामान्तरङ्गो दूतस्तोरणमध्यास्त इति राजा तु तमाशु प्रवेशयेति प्रादिशत् दक्षतया क्षितिपालादराच्च प्रतीहारः स्वयमेव निरगात् अनन्तरञ्च हंसवेगः सविनयमाकृत्यैव नयनानन्दसम्पादसुभगाभोगभद्रया समुल्लङ्घ्यमानगुणगरिमा प्रभूतप्राभृतकानां भृतामभृतकानां पुरुषाणां समूहेन महतानुगम्यमानः प्रविवेश राजमन्दिरं। दूरादेव पञ्चाङ्गालिङ्गिताङ्गणः प्रणाममकरोत् एह्येहीति सबहुमानमाहूतश्च प्रधावितोपहृतः

पादपीठलुठितशेखरान्यस्तहस्तः पृष्ठे पार्थिवेनोपहृत्य भूयोऽपि नमश्चकार स्निग्धनरेन्द्रदृष्ट्यादिष्टमनतिविप्रकृष्टञ्च प्रदेशमध्यास्त। ततो राजान्तरतश्च तनुभीषदिव दधानश्चामरग्राहिणीमन्तरालवर्तिनमुत्सार्य सम्मुखीनं सप्रश्रयं पप्रच्छ हंसवेगः।

श्रीमान् कच्चित्कुशली कुमार इति स समभ्यवादीत् अद्य कुशली यमेवं स्नपितया सौहार्दार्द्रसगौरवं गिरा पृच्छति देव इति स्थित्वा च मुहूर्तमिव पुनः सचतुरमुवाच चतुरम्भोधिभोगभूतिभाजनभूतस्य देवस्य सद्भावगर्भमपहाय हृदयमेकमन्यदनुरूपं अप्राकृतमेव दुर्लभं लोके तथाप्यस्मत्स्वामिना सन्देशमशून्यतां नयता पूर्वजोपार्जितं वारुणमातपत्रमाभोगाख्यमनुपस्थानन्यासेन कृतार्थीकृतमेतत् अत्र हि कुत्र हलक्ष्मि बहुन्याश्चनि दृश्यन्ते प्रतिदिवसं प्रविशति शैत्यहेतौ च्छायानां किरणसहस्रादेकैकशः सोमरश्मिं अस्मिन् प्रविष्टे प्रख्यानानन्तरं स्वादवोदन्तवीणापदेशाचार्याश्च्योतन्ति चन्द्रभासां मणिशलाकाबोधावदच्छमच्छधाराः प्रचेताइव यश्चतुर्णां मध्यर्णवानामधिपतिर्भूतो भावितमनुगृह्णातिच्छायया नेतारं इदञ्च न सप्तार्चिर्दहति न दृषद्भ्रो हरति नोदकमार्द्रयति न रजांसि मलिनयन्ति न जरा जर्जरयति तदेतत्तावदनुगृह्णातु दृष्टा देवः सन्देशमपि विश्रब्धः श्रोष्यसीति अभिधाय निर्वर्त्यात्मीयं पुरुषमप्यशात् उत्तिष्ठ दर्शय देवस्येति स च वचनानन्तरमुत्थाय पुनरुच्चीचकार धौतदुकूलकल्पिताच्च निचोलकादाकाङ्क्षामकाङ्क्षीत्।

आकृष्यमाणे एतस्मिन्नतिसितमहसि सरभसमहासिभरणे रसाद्रुरलसञ्च शेषफणिफणामण्डलेन आस्यायीव

वक्रीभूतान्तरिक्षे क्षीरोदेन प्रवहतीव गगनाङ्गणे गोष्ठीबन्धः शारदबलाहकव्यूहेन व्यश्रामीव विततपक्षपातिना वियति पितामहविमानहंसयूथेन सलिलैर्वनिर्गतस्य धवलतामण्डलमनोहरोहृष्ट इव जनेन जन्मदिवसः कुमुदबन्धोः प्रतीष्य कृत इवोन्मनायमनाथो नारायणनाभिपुण्डरीकस्य आश्रितेव कौमुदी प्रदोषदर्शनानन्दहृपिरञ्चां उदमाङ्क्षीदिव मन्दाकिनीपुलिनमण्डलं महदम्बरोदरे परिवर्तितइव दिवसं सुवर्णमासीन्निशया मन्दमन्द मिन्दूदयसन्देहदूयमानमानसैर्विघटितं विघटमानचञ्चुच्युतमृणालकोटिभिः त्रासत्वक्रमलिनीचक्रवाकमिथुनैः शरत्जलधरपटलशङ्कासङ्कोचितकेकारवमूकमुखपुटैः पराङ्मुखीभूतं भवनशिखण्डिमण्डलैः प्रबुद्धमाबद्धचन्द्रोदयोद्दामदलद्दलपुटाट्टहासविशदं कुमुदषण्डैः चित्रीयमाणचेताश्च सराजको राजा हंसकानुसाराधिरोहिण्या दृष्ट्या सादरमतिशुक्तिलकमिव त्रिभुवनस्य शैशवमिव श्वेतद्वीपस्याङ्गावतारमिव शरदिन्दोः हृदयमिव धर्मस्य निवेशमिव शशिलोकस्य दन्तमण्डलधवलं मुखमिव चक्रवर्तित्वस्य मौक्तिकजालपरिकलितं सीमन्तचक्रमिव दिवो बहुलज्योत्स्नालोकशुक्लमैन्द्रवमिव परिवेषवलयं शौक्लापहसितशङ्खश्रीकं श्रवणमण्डलमिव निश्चलतां गतमैरावतस्य श्वेतगङ्गावर्त्तपाण्डुरं पदमिव त्रिभुवनवन्दनीयं त्रिविक्रमस्य प्रचेतसचूडामणिमरीचिशिखाभिरवशिष्टाभिर्मानसबिसतन्तुमयीभिश्चामरिकावलिभिर्विरचितपरिवेषमुपरि चक्रवर्तिलक्ष्मीनूपुरश्रवणदोहलनिश्चलेनेव लक्ष्मणा विततपत्रेण हंसेन सनाथीकृतशिखरं तदता च प्रभावस्तम्भितेन

मन्दाकिनीमृणालेनेव मुकुलितफणेन वासुकिनेव नीतेन दण्डेन द्योतमानधवलिम्ना क्षालयदिव नक्षत्रपथं प्रभाप्रवाहप्रथिम्ना प्रावृण्वदिव दिवसमुष्णांशुनाधःकुर्वदिव दिवमुपरिस्थितमिव सर्वमङ्गलानां श्वेतमण्डपश्रियमिव स्तम्बकमिव ब्रह्मस्तम्बस्य नाभिमण्डलमिव ज्योत्स्नाकामिन्या विशदहासमिव कीर्तेः फेनराशिमिव खस्याया राजलक्ष्म्ययशःपटलमिव शौर्यत्रैलोक्याद्भुतभूतं महातपम् ।

दृष्टे च राज्ञा तस्मिन् प्रथमं शेषमपि प्राभृतं प्रकाशयाञ्चक्रुः क्रमेण कर्मणा तद्यथा परार्ध्यरत्नांशुशोणीकृतदिग्भागान् भगदत्तप्रभृतिप्रख्यातपार्थिवपरम्परागताननुपहतलक्षणानलङ्कारान् प्रभालेपिनाञ्च मणीनां उत्कर्षान् क्षीरोदधेर्धवलताहेतूनिव च हारान् अनेकरागरुचिरवेत्रकृतकुण्डलीकृतानि च शरच्चन्द्रमरीचिशोचक्षमाणि क्षौमाणि कुशलशिल्पिलोकोल्लिखितानां शुक्तिशङ्खगल्लकप्रमुखानां पानभाजनानां निचयान् निचोलरक्तकवचांश्च रुचिरकाञ्चनपत्रभङ्गगुरुप्रतिबद्धपरिवेषाणां कार्मरङ्गचर्मणां सम्भारान् भूर्जत्वक्कोमलस्पर्शवतीर्जातिपट्टिकाश्चित्रपटीकरोचिषाञ्चर्मणां म्रदीयसां मसूरकोपधानकादीन् विकारान् प्रियङ्गुप्रसङ्गपिङ्गलानि चासनानि वेत्रलतामयानि अगरुवल्कल कल्पितसञ्चयानि च सुभाषितभाञ्जि पुस्तकानि परिणीतिपटलपटोलत्विषि अवतरणहारीतहरिति च क्षीरक्षारिणि पूगानां पल्लवावलम्बिनि सरसानि फलानि लतासहकाररसानाञ्च कृष्णागुरुतैलस्य च कपोतकपिलकापोतिकापलाशकोशीकवचिताङ्गी स्थवीयसीर्वैणवीर्नालीश्च पट्ट-

स्थूलं प्रसेवकार्पितांश्च भिन्नाञ्जनकृष्णस्य कृष्णागुरुणो गुरुपरितापमुषश्च गोशीर्षचन्दनस्य तुषारशिलाशकलशिशिरस्य स्वच्छसितस्य च कर्पूरस्य कस्तूरिकाकोशानाञ्च पक्वफलजूटजटिलांश्च तक्कोलपल्लवानां लवङ्गपुष्पमञ्जरीणाञ्च जातीफलस्तबकानाञ्च राशीन् अतिमधुरमधुरसामोदनिर्झरिणि खोल्लककलशीसितसितस्य चामरकलापस्य निकरान् अवलम्बमानतूलिकालाबुकांश्च लिखितानालेख्यफलकसम्पुटान् कुतूहलकृन्ति कनकशृङ्खलानियमितग्रीवाणां वनमानुषीणां जीवकानां जलमानुषाणाञ्च मिथुनानि परिमलामोदितककुभश्च कस्तूरिकाकुरङ्गान् गृहपरिचरणपराश्चमरीः चामीकरचित्रवेत्रपञ्जरजुषो बहुसुभाषितजालजल्पाकजिह्वाश्च जातीः कौशिकशुकशारिकाप्रभृतीनां पक्षिणां प्रवाललतापञ्जरगतांश्च चकोरान् जलहस्तिनामुदग्रकुम्भमुक्तमुक्ताफलदामदन्तुराणि दन्तकाण्डकुण्डलानि राजकृतच्छत्रदर्शनात् प्रहृष्टहृदयप्रथमप्रयाणशोभननिमित्तमिति मनसा जग्राह ।

हंसवेगश्च प्रीयमाणोबभाषे भद्र ! सकलरत्नधाम्नः परमेश्वरशिरोधारणार्हस्यास्य महातपत्रस्य महार्णवादिव कुमुदबान्धवस्य कुमाराल्लाभो न विस्मयाय बाल्यविद्याः खलु महतामुपकृतयइति अपनीते च तस्मात् प्राभृतसम्भारे क्षणमिव स्थित्वा हंसवेगं विश्राम्यतामिति प्रतीहारभवनं विसर्जयांबभूव स्वयमप्युत्थाय स्नात्वा मङ्गलाकाङ्क्षी प्राङ्मुखः प्राविशदाभोगस्य च्छायाम् ।

अथ विशतएवास्य छायाजन्मना जड़िम्ना चूड़ामणितां अनीयतेव शिरसि शशिबिम्बं अम्बुबिन्दुमुचं तु चुचु-

स्फुरिव चन्द्रकान्तमणयो ललाटपट्टफलकं कर्पूरेणेव व्यलीयन्त लोचनयुगले गले गलिततुहिनकरकृतनीहाराश्रुधारा-द्रवावश्यन्त हरिचन्दनरसासारेणेवाप्यतिसततमुरसि कुमुदमयमिव हृदयमभवदतिशिशिरं अन्तर्हितशिलेव विलीयमाना-व्यलिम्पदङ्गानि जातविस्मयश्चाकरोन्मनसि एकमङ्गमपहाया-स्य नास्ति प्रतिमान्याकीलिते आहारकाले च हंसवेगाय धवलकर्पटप्रावृतकलधौतनालिके परिगृहीतं विलिप्तशेषं चन्दन मङ्गस्पृष्टे वाससी शरत्तारकातरमुक्तास्तबकितं पदकं परिवेषनाम कटिसूत्रं अतिमहार्हपद्मरागालोकालोहिनीकृतश्च तरङ्गकं नाम कर्णाभरणं प्रभूतञ्च भोज्यजातं प्राहिणोत् एवम्प्र-कारेण च क्रमेण जगाम दिवसः ।

ततः कटकचलबहलधूलीधूसरितवपुरंशुमाली मलीमसमङ्गमिव क्षालयितुमपरजलधिमवातरत् आभोगातपत्र-प्रदानवार्तामिव चावेदयितुं वरुणाय वारुणीं दिशमवासीत् मुकुलायमानसकलकमलवना प्राङ्मुखएवाबद्धसेवा-ञ्जलिपुटेव सद्वीपा भूरभूत् भूपतेः नृपानुरागराशिमय इव निखिललोकाञ्जलिबन्धबन्धुरोग्राह सन्ध्यारागः गौडाधिपा-पराधशङ्किनीव श्यामतां प्रपेदे प्राची दिक् स्फुरिततिमि-रनिकारनिर्वाणान्यनृपप्रतापानलकलापेव कालिमानमतानीन्मेदिनीप्रदोषास्थानपुष्पप्रकारमिव विकचतगररुचिरं रचिकबन्धुनिकरमविरलं ककुभः स्कन्धावारगन्धगजमदगन्धधावितस्येव मार्गो वियति विरराज रजः पाण्डुरैरावतस्य कुपितनृपव्याघ्राक्रान्तासुपदृष्टामिव पौरन्दरीं ककुभं विहाय स्वलमाकरोत्स रोहिणीरमणः प्रयाणयातां इव मानितां

हृदयभेदिन्योययुरिन्दुदीधितयो दश दिशः नृपतिदण्डयात्रा-त्रासातुरा इव तरलितसत्त्ववृत्तयश्च चुक्षुभिरे पत्तयोवाहि-नीनां चित्तेव भूभृतां हृदयानि विवेश गुहाविवराणि विमुक्तस-र्वाशातिमिरसन्ततिः प्रतिसामन्तचतुषामिव ननाश निद्रा-कुमुदवनानां अस्याञ्च वेलायां वितानतलवर्त्तिनरेन्द्रस्तावदिति विसृज्यानुजीविनोहंसवेगमादिष्टवान् कथं कुमारसन्देशमिति स प्रणम्य कथयितुं प्रास्तावीत् देव! पुरा महावराहसम्पर्क-सम्भूतगर्भया भुवा भगवत्या नरको नाम सूनुरसावि रसातले-वीरस्य यस्याभवन् बाल्यएव पादप्रणामप्रणयिनश्चूडामणयो लोकपालानां यस्य च त्रिभुवनभुजोभुजशौण्डस्य भवनकम-लिनीचक्रवाक्या अपि कोपकुटिलकटाक्षेक्षितो भयचकिताऽरुण-परिवर्त्तितरथोनाज्ञया नारविरस्तमभजत यश्च वरुणस्य बहिर्वर्त्ति हृदयमिदमातपत्रमकार्षीत् महात्मनोऽस्यान्वये भगदत्तवज्र-दत्तपुष्यदत्तप्रभृतिषु बहुषु मरुमहितेषु महत्सु महीपालेषु प्रपौत्रो महाराजभूतिवर्मणः पौत्रश्चन्द्रमुखवर्मण. पुत्रो देवस्य कैलासस्थिरस्थितेः स्थलवर्मणः सुरवर्मा नाम महाराजाधि-राजोजज्ञे तेजसां राशिर्म्हगाङ्कइति यं जना जगुः यो हि यम-जेत्रेवाजयत सहैवाहङ्कारेण यश्च बालएव प्रीत्या द्विजाति-क्र्याचारादीन् समग्रान् प्रतिग्राहानग्राहयत्।

यत्र च राजनि दुर्लभं लवणाय सम्भूतायाः परममा-धुर्यमभूल्लक्ष्म्याः तथा च यो वाहिनीपतीनां शङ्कं जहार न रत्नाणि पृथिव्याः स्थैर्य्यञ्जग्राह न करं अवनिभृतां गौरव-मादत्त न नैष्ठुर्यं। तस्य च सुगृहीतनाम्नो देवस्य रुद्रादेव्यां श्यामादेव्यां भास्करद्युतिर्भास्करवर्मापरनामा शन्तनो

स्तनयो भीष्म इव कुमारः समभवत् अस्य च शैशवादयं सङ्कल्पः स्थेयान् स्थाणुपदारविन्दं च ऋते नान्यन्नमस्कुर्यादिति ईदृशश्चायं मनोरथस्त्रिभुवनदुर्लभस्त्रयाणामन्यतमेन सम्पद्येत सकलभुवनतलविजयेन वा मृत्युना वा यदि वा प्रचण्डप्रतापज्वलनजनितदिग्दाहेन जगत्येकवीरेण देवोपमेन मित्रेण वा मैत्रीव प्रायः कार्यव्यपेक्षिणी क्षीणीभूता कार्यञ्च कीदृशंनाम तद्भवेत् यदुपन्यस्यमानमुपनये मित्रतां देवं देवस्य हि यशांसि सिषाधयिषोर्धनानि बहिरङ्गभूतानि बाहावेव केवले निषण्णस्य शेषावयवानामपि साहायकसम्पादनमनोरथः निरवकाशः किमुत जनस्य बाह्यस्य चतुःसागरशरणात् परमस्य पृथिव्येकदेशदानोपन्यासेन का तुष्टिः अभिरूपकन्यकाविश्राणनविलोभनमपि लक्ष्मीमुखारविन्ददर्शनदुर्ललितदृष्टेरकिञ्चित्करं एवङ्घटमानसकलोपायसम्पदि पदार्थेऽस्मिन् प्रार्थनमात्रे केवलमनुरुध्यमानः शृणोतु देवः।

प्राक्ज्योतिषेश्वरो देवेन सह एकपिङ्ग इवानङ्गद्विषा दशरथ इव गोत्रभिदा धनञ्जय इव पुष्कराक्षेण वैकर्तन इव दुर्योधनेन मलयानिल इव माधवेनाजर्यमित्रमिच्छति यदि च देवस्यापि मित्रीयति हृदयं अवगच्छति वा पर्यायान्तरितं दास्यं अनुतिष्ठन्ति सुहृद इति तदिदमस्य समाज्ञाप्यतां अनुभवतु विष्णोर्मन्दरगिरिरिव विकटकेयूरकोटिविघट्टनरणितकटकमणिशिलाशकलानि गाढोपगूढानि देवस्य कामरूपाधिपतिः अस्मिन्नात्रपेर्विमललावण्यसौभाग्यसुधानिर्झरिणि निर्मले मुखशशिनि चिराच्चक्षुषी चालयतु प्राग्ज्योतिषेश्वरश्रीः नाभिनन्दति चेद्देवः प्रणयमाज्ञापयतु किं कथनीयं स-

यास्मत्स्वामिन इति विरतवचसि तस्मिन्नवनिपालः पूर्वोपलब्धैरेव गुरुभिर्गुणैरारोपितबहुमाने कुमारे आभोगातपत्रव्यतिकरेण परां कोटिमारोपितेति प्रणतिलज्जमान इव सादरं जगाद ।

हंसवेग ! कथमिव तादृशि महात्मनि महाभिजने पुण्यराशौ गुणिनां प्रश्नरे परोक्षसुहृद स्निह्यति सति मद्विधस्यान्यथा स्वप्नेऽपि वर्तते मनः सकलजगदुत्तापनपटोऽपि शिशिरायन्ते त्रिभुवननयनानन्दकरे कमलाकरे करास्तिग्मतेजसः सुबहुगुणगणक्रीतास्वं केवलसख्यस्य सज्जनमाधुर्याणामभृतकास्योदश दिशः एकान्तावदातोत्तानस्वभाववृत्तस्य कुमु स्य कृते केनाभिहितः शिशिररश्मिः. श्रेयांश्च सङ्कल्पः कुमारस्य स्वयं बाङ्गालिनमधि च समालम्बितशरासने सुहृदि भगवतो हराद्दते कमन्यं नमस्यतीति सम्बर्द्धिता च मे प्रीतिरमुना सङ्कल्पेन यतः कुलोचितैव नः सुरासुरपरमगुरौ परमेश्वरे भगवति भक्तवत्सले भूयसी भक्तिरेकभक्तस्य ताहि जनयति जने परम्पक्षपातम् ।

अपिचावलेपिनि पशौ केसरिण्यपि बहुमानो हृदयस्य मे किं पुनः सुहृदि तत्तथा यतेथाः यथा नाति चिरमिवेयमस्मान् क्लेशयति कुमारदर्शनोत्कण्ठेति हंसवेगस्तु विज्ञापयाम्बभूव देव ! किमपर मिदानीं इयं क्लेशयति अभि जातमभिहितं देवेन किन्तु सेवाभीरवोहि सन्तः तत्रापि विशेषेणाय महङ्कारघनो वैष्णवो वंशः आस्तां तावदस्मत्स्वामिवंशः पश्यतु देवः पुरुषस्यहि सेवां प्रति दुर्जनस्येवातिवृद्धया दुर्गत्याभिमुखीक्रीयमानस्य कुटुम्बिन्येवासन्तुष्टया तृष्णया वा प्रेर्यमाणस्य दुर-

पत्यैरिव यौवनजनितैर्नानाभिलाषिभिरसत्सङ्कल्पै र्व्याकुली-
क्रियमाणस्य कुमारमिव परमार्गणायोग्यामतिमहती मवस्थां
वा पश्यत स्वगृहे बन्धुभिरिव दुःस्थितैः समग्रैर्गृहैर्वा गृह्यमा-
णस्याभियोगं पुरातनैरतिदुस्त्यजैर्गुरुभिरिव मलिनैः कर्मभिर्वानु-
वर्त्तमानस्य सकलशरीरसन्तापकरं करीषमिव दुष्कृति-
ना कृतचित्तस्य प्रवेष्टुं राजकुलमुपहसतः कलेन्द्रियशक्तैरिव
मिथ्यैव हृदयगतविश्वग्रामग्रहणाभिलाषस्य प्रथममेव तोरण-
तले चन्दनमालाकिसलयस्यैव शुष्यतोद्वाररक्षिभिः निरुद्धस्य
निपीडितस्यापि प्रविशतो द्वारे हरिणस्येवापरैर्हन्यमानस्य च
क्षमं चर्मपुटस्येव मुहुर्मुहुः प्रतिहारमण्डलप्रहारैर्निरस्य निधि-
पादपप्ररोहस्येव द्रविणाभिलाषादधोमुखीभवतोऽप्यमार्गणस्या
प्यतिविकृष्टविधृतविसर्जितस्योद्वेगं व्रजतः कण्टकस्यापि च रण-
लग्नस्याकृष्यति लघीयाक्षिप्यमाणस्य मकरकेतोरिवाकालो-
पसर्पणाकुपितेश्वरदृष्टिदग्धस्य प्रलयमुपगच्छतोऽनेकपैरिव-
कोपनभर्त्सितस्याभिन्नमुखरागस्य ब्रह्मघ्न इव प्रतिदिन-
सम्बन्दनोद्दृष्टशिरःकपालस्य स्वर्गनरहितस्याशुभकर्मणि
निर्वहतस्त्रिशङ्कोरिवोभयलोकभ्रष्टस्य नक्तंदिवमवाक्शिरसो-
वाजिन इव कवलग्रहणेन मुखबाह्यनात्मानं विदधानस्यानशन-
शायिन इव हृदयस्थापितजीवनाशस्य शरीरं क्षपयतः शुन
इव निजदारपराङ्मुखस्य जघन्यकर्मलग्नस्यात्मानमुत्तान-
यतः प्रेतस्येवानुचितदीयमानान्नपिण्डस्य बलिभुक् जन्म इव
जिह्वालौल्योपयुक्तपुरुषवर्षसोढथाविहिता विहितायुषो जी-
वितश्मशानपादपानिव पिशाचस्य दग्धभूम्या परुषीकृतान्
राजवल्लभानुपसर्पतो विपरीतजिह्वाजनितमाधुर्यै रोष्ठमात्र-

प्रकटितरागैः राजशुकालापैः शिशोरिव मुग्धस्य विलोभ्यमान-
वेतालस्येव नरेन्द्रप्रभावविशिष्टस्य न किञ्चिन्नाचरतश्चित्रधनुष
इवालीकगुणाध्यारोपणक्रियानित्यनम्रस्यालेख्यप्रदीपस्येव नि-
र्वाणतेजसो बककूटस्येव निर्माल्यग्राहिनः कफविकारिण
इव दिने दिने कटुकैरुद्वेज्यमानस्य सौगतस्येवार्थशून्य-
विज्ञप्तिजनितवैराग्यस्य काषायाण्यभिलषतः क्षपणकस्येवानेक-
कान्तार्थाधिगमाकुलधियः हृदयोपचितमलीकनिशास्वपि मात्र
बलिपिण्डस्येव दिक्षु विक्षिप्यमाणस्याशौचगतस्येव कुशयन-
जनितसमधिकारदुःखवृत्तेस्तुलायन्त्रस्येव पश्चात्कृतगौरवस्य
तोयार्थमपि नमतोऽतिकृपणस्य शिरसा केवलेनासन्तुष्टवचसापि
पादौ स्पृशतोनिर्दयवेलिवेलताडनत्रस्तयेवापत्रपया त्यक्तस्य दै-
न्यसङ्कोचितहृदयकृतावकाशयेवाहोपुरुषिकया परिवर्जितकु-
त्सितकर्माङ्गीकरणकुपितयेव चोन्नमत्या विमुक्तस्य धनश्रद्धया
क्लेशानुपार्जयतः स्वदृष्टिबुद्ध्यावमानं सम्बर्धयतो मूढस्य सत्यपि
विविधकुसुमाधिवाससुरभिणि वने मृगतृष्णायां तृष्णयाञ्ज-
लिमुपरचयतः कुलपुत्रस्यापि कृतागस इव भीतभीतस्य समी-
पं उपसर्पतो दर्शनीयस्यापि आलेख्यकुसुमस्येव निष्फलजन्मनो
विदुषोऽपि वैधेयस्येवापशब्दमुखस्य शक्तिमतोऽपि श्वित्रिण
एव सङ्कोचितकरयुगलस्यात्मसमुत्कर्षेषु निरग्निपच्यमानस्य
नीचसमीरणेषु सोच्छ्वासं म्रियमाणस्य परिभववचनैस्तृणी-
कृतस्य दुःखानलेन तेजोज्वलतोऽतो भक्तस्याप्यभक्तस्य निरु-
ष्मणोऽपि सन्तापयतोबन्धून् विमानस्याप्यगतिकस्य च्युतगौर-
वस्याप्यधस्ताद् गच्छतो निःसत्वस्यापि महामांसविक्रयं कु-
र्वतो निर्मदस्याप्यस्वतन्त्रवृत्तेरयोगिनोऽपि ध्यानवशीकृतात्मनः

शौर्य्यार्थं प्रणमतो दग्धसुखस्य गोत्रविदूषकस्य मनस्विजनं त्रासयतः कुलाङ्गारस्य वंशं दहतो नृपशोषणोऽपि लब्धैः कन्धरामवनमयतो जठरपरिपूरणमात्रप्रयोजनजन्मनो मांसपिण्डस्य गर्भरोगस्य मातुः पुण्यानां कर्मणां मरणात् हतकस्य पातकिनः किं प्रायश्चित्तं क्व प्रतिक्रिया क्व तस्य शान्तिः कीदृशं सुखं कः पुरुषाभिमानः किन्नामानो विलासाः कीदृशी भोगश्रद्धा प्रबलपङ्क इव सर्वमधस्तान्नयति दारुणोदासशब्दः धिक् उच्छ्वसितं उपधातु निधानन्तादनं अभवन्निर्भूतिरस्तु तस्याः नमो भगवद्भ्यस्तेभ्यः सुखेभ्यः तस्यायमञ्जलिरैश्वर्यस्य तिष्ठतु दूरतएव सा श्रीः शिवं स परिच्छदः करोतु यदर्थमुत्तमाङ्गमागमिष्यति अशापानुग्रहत्वमस्तपस्वी असुखप्रियतरः क्लीबः अपूतिमानवस्कारक्रिमिः अगण्यमानोनरकः पादधूलिधूसरितोत्तमाङ्गोजङ्गमः पादपीठः पुंस्कोकिलः काकुभणितेषु स्थलकमठः क्रीडाकर्षणेषु श्वानीचाचाणेषु कृकलासः शिरोविडम्बनासु जाहकः आत्मसङ्कोचनेषु प्रतिपादुकः पादसंवाहनेषु कन्दुकः करतलताडनेषु वीणादण्डः कोणाभिघातेषु वेणुमूर्च्छनासु वेश्याकायः करणबन्धनक्लेशेषु यलालराशिः सत्वशालिषु वराकः सेवकोऽपि मर्त्यमध्येराजिलोऽपि भोगिपुलाकोऽपि कलमः वरं क्षणमपि कृतामानवतामानरतां नमतो नमतस्त्रैलोक्याधिराज्योपभोगोऽपि मनस्विनः तदेवमभिनन्दितास्मात् प्रणयोदेवोदिवसैः कतिपयैरेव परागतः प्राग्ज्योतिषेश्वरइति करोतु चेतसीत्युक्त्वात्तूष्णीमभूत् चिराच्च नमस्कृत्य निर्जगाम राजापि रजनीन्तां कुमारदर्शनौत्सुक्य स्वीकृतहृदयोऽनैषीत् आत्मार्पणं हि महतां मूलमन्त्रमयं वशीकरणं प्रभाते च प्रभूतं

प्रतिप्राभृतं प्रधानप्रतिभूतावेष्टितं दत्त्वा हंसवेगं प्राहिणोत् । आत्मनापि ततः प्रभृति प्रयाणकैरनवरतैरभ्यमित्रं प्रावर्तत । कदाचिच्च राज्यवर्द्धनभुजबलार्जितमशेषं मालवराजसाधनमादायागतं समीप एवासीनं लेखहारिकात् भण्डिमशृणोत् । श्रुत्वा चाभिनवभूतभ्रातृशोकङ्कुताशनस्पर्शनकातरे हृदये बभूव मूर्च्छा अन्धकार मिव विवेश अतिष्ठच्च समुत्सृष्टसकलव्यापारः प्रतिभारनिवारणनिःशब्दपरिजने निजमन्दिरे सराजपरिवारः तदा गमन मुदीक्षमाणो मुहूर्तम् ।

अथ भण्डिरेकेनैव वाजिना कतिपयकुलपुत्रपरिवृतः परिमलिनवासाः रिपुशरशल्यपूरितेन निखातबहुलोहकीलपरिकरपरिरचितस्फुटनेनेव हृदयेन हृदयलग्नैः स्वामिसुकृतैरिव अश्रुभिर्धृति मुत्पादयन् दूरितव्यायामपरिशिथिलभुजं दोलायमानमङ्गलवलयैकशेषालङ्कृतिरनादरोपयुक्तताम्बूलविकलरागेण शोकदहनदह्यमानस्य हृदयस्याङ्गारागेणैव दीर्घनिश्वासवेगनिर्गतेनाधरेण शुष्यता स्वामिविरहविधृतजीवितापराधवैलक्ष्यादिव बाष्पवारिपटलेन प्रावृतवदनो बिभ्यन्निव दुर्बलीभूतैः स्वाङ्गैरेवापत्रपयाङ्गैर्वमन्निव प्रत्यक्षीभूतं महोत्क्षाणमायतैः श्वसितैः पातकीवापराधीव दोषीव मुषित इव यूथपतिपतनविषम इव वेतण्ड इव सूर्यास्तमयनिःश्रीक इव कमलाकरः दुर्योधननिधनदुर्मना इव द्रौणिरपहृतरत्नसार इव सागरो राजद्वार माजगाम ।

अवतीर्य च तुरङ्गमादवनतमुखो विवेश राजमन्दिरं दूरादेव विमुक्ताक्रन्दम्पपात पादयोः अवनिपतिस्तु तमुत्थाय प्रविरलैः

पादैः प्रत्युद्गम्योत्थाप्य कण्ठे गाढमुपगृह्य करुणमतिचिरं रुरोद । शिथिलीभूतमन्युवेगश्च पुरेव पुनरागतनिजासने निषसाद । प्रथमप्रक्षालितमुखे भण्डिमुखं प्रक्षालयत् च अति क्रान्ते कियत्यपि च कालशकले भ्रातुर्दावर्तमानं वृत्तान्तं अप्राक्षीत् अकथयच्च यथावृत्तान्तमखिलं भण्डिः ।

अथ नरपतिस्तमुवाच राज्यश्रीवृत्तान्तः क्वेति स पुनरब्रवीत् देव! देवभूयं गते राज्यवर्धने गौडैः स्फीता च कुशस्थले देवी राज्यश्रीः परिभ्रष्टा बन्धनाद्विन्ध्याटवीं सपरिजना प्रविष्टेति लोकतोवार्तां अशृणुवं । अन्वेष्टारस्तु तां प्रति प्रभूताः प्रहिता नाद्यापि निवर्तन्त इति तच्छ्राकर्ण्य नरपतिरब्रवीत्किमपरैरनुपदिभिर्यत्र सा परित्यक्तान्यकृत्य स्वयमेवाहं यास्यामीति भवानपि कटकमादाय प्रसादेन प्रवर्तन्तां गौडाभिमुखं इत्युक्त्वा चोत्थाय स्नानभूमिमगात् । कारितशोकश्मश्रुवपनकर्मणा च महाप्रतीहारभवनं स्नातेन शारीरकवसनकुसुमाङ्गरागालङ्कारप्रेषणप्रकटितप्रसादेन भण्डिना सार्द्धं भुक्तं निनाय च तेनैव सह वासरम् ।

अथापरेद्युरुषस्येव भण्डिर्भूपालमनुसृत्य व्यज्ञापयत् पश्यतु देव! श्रीराज्यवर्धनभुजबलार्जितं साधनं सपरिबर्हं मालवराजस्येति नरपतिना चैव भर्वात्वित्यभ्यनुज्ञातोदर्शयांबभूव । तद्यथा अनवरतगर्जितमदमदिरामोदमुखरमधुकरजटिलकरटपट्टपङ्किलगन्धान् गण्डशैलानिव जङ्गमान् गम्भीरगर्जितरवान् जलधरानिव महीमवतीर्णानुत्फुल्लसप्तच्छदामोदमुदः शारदानिव दिवसान् पुञ्जीभूतानेकसहस्रसङ्ख्यान्

करिणश्चामीकररचितचामरमण्डनमनोहरांश्च हरिणरंहसो-हरीन् बालातपविवरवर्णिनश्च करेणकेन्द्रायुधीकृतदश-दिशामलङ्काराणां विशेषान्विस्मयकृतस्मरोन्मादिमालवीकुच-मिलनदुर्ललितांश्च निजज्योत्स्नाकृतनीहाराहारानुडुपतिसञ्च-यान् निजयशांसीव बालव्यजनानि जातरूपनालञ्च निवासञ्च पुण्डरीकमिव श्रियः श्वेतमातपमश्चरस इव बकुसमररसानु-रागावतीर्णा वारविलासिनी सहासनस्य धनादिप्रभृतीनित्र राज्योपकरणानि कालायसनिगडनिश्चलीकृतचरणयुगलञ्च सकलं मालवराजलोकमशेषांश्च संख्यालेख्यपत्रकान् सालङ्कार-पेटापीडान् कोशकलशानयावलोक्य तत्सर्वमवनिपालः स्वीकर्त्तुं यथाधिकार मादिशदध्यक्षान्।

अन्यस्मिंश्चाहनि स्वयं ससार मन्वेष्टुं समुच्चचाल विन्ध्याटवीं। अवाप च परिमितैरेव प्रयाणकैस्तामथ प्रविशन् दूरादेव दह्यमानषाष्टिकबुसविसरविसारिणां विभावसूनां वन्यधान्यबीजधान्यदाहिनां धूमेन धूसरितमादधानैः शुष्क-शाखासञ्चयनिचितगोपाङ्गवेष्टितनिकटनिबिडवटैर्विपदि व-त्सर इव रोषाविष्टगोपकल्पितस्य प्रयत्नैरयन्त्रितवनपालाहङ्-क्रियमाणग्रामीणकाककुठारे गहनतरुखण्डनिर्मितचामुण्डा-मण्डपैर्वनप्रदेशैः प्रकाश्यमानमटवीं प्रायतयाकुटुम्बभरणा-कुलैः कुद्दालप्रायकृष्टिभिः कृषीवलैरवखनद्भिरल्पभागभाषि-तेन भज्यमानभूरिखिलक्षेत्रमण्डल मल्पावशेषकालशिलैश्च कालायसैरिव कृष्णमृत्तिकाकठिनैः स्थानस्थानस्थितस्थूल-पल्लवैर्दुरुपगं श्यामाकप्ररूढिभिरलम्बुसाबकुलैरविरहितैः को-

किलासैः क्षुपैर्विरलविरलैः केदारैः कृच्छ्रात्कृष्यमाणैर्नातिदूर-
वर्तिभिः प्रभूतप्ररूढभुवस्तुपलोलमुपरचितैरुच्चैर्मञ्चैः सूच्यमान-
श्वापदोपद्रवं दिशि प्रतिमार्गद्रुमदन्तानां पथिकपटप्रस्फोट-
नधूलीधूसरैर्वनपल्लवै र्लाञ्छितच्छायानां षण्ढीसुलभ-
कुसुमार्चितनवस्थातकपीतकोपिकण्ठप्रतिष्ठापितनगघटानां
च्छिद्रस्फुटकल्पितकुटीरकाणां कुटिलकीटवेणीवेष्ट्यमानसक्तु-
शरावश्रेणीनां मरुद्गगनगजजग्धजम्बूफलास्थिशबलभुवां उद्धू-
तधूलीकदम्बकस्तबकप्रकरपुलकितानां कर्करीचक्राक्रान्तका-
ष्ठकुञ्चिकामुषिततृषां नद्यन्तलशीतलसिकतिलकशोषशमित-
श्रमाणामनाम्लानशैवलश्यामलितं निर्झरायमाणशोषसरः-
शिशुमर्दकारफलजूटजटिलस्थूलानां विश्राम्य कार्पटिक-
पेटकपरिपाटीपीयमानपयसामटवीप्रदेशप्रपाणां शैत्येन त्यज-
न्तमिव पैशुनमूष्माणमर्धदूर्वीक्ष्यं ग्राहयन्तमिवागरीयोदा-
रुसंप्रदायिभिर्ज्योत्स्नाकरैः सर्वतश्च प्रातिवेश्यविषयवा-
सिनामानन्दमासन्नग्रामकूटस्थविरपाल्यमानस्तनितेन शत-
दारुदारणव्यायामयोग्याभ्यङ्गेन स्कन्धाध्यासितकठोरकुठा-
रकण्ठलम्ब्यमानप्रतारापुटेन पाटच्चरं प्रत्युवाच प्रत्यति-
पन्नपटच्चरेण कालवेत्रविगुणव्रततीवलयपाशग्रथितपञ्चवी-
टिकाविहितमुखैर्घटितघटैरूढवारिणा पुरःसरबलिवलीवर्द-
युगरथेन नैकटिककुटुम्बलोकेन काष्ठसंग्रहार्थमटवीं प्रवि-
शता श्वापदपथव्यवधानधवलसमारोपितकुटीरकृतकूटपाशैश्च
गृहीतमृगग्रहणततन्तुतन्त्रीजालावलयवागुरैर्वङ्कभिर्व्याधैर्विचर-
द्भिरंसावसक्तवीतंसव्यावलम्ब्यमानपाशपाशकैश्च सङ्गृहीतग्रा-

ह्कक्रकरकपिलादिपञ्जरैः शाकुनिकैः सञ्चरद्भिश्चूतशकले
विक्षिप्तलतालग्नलम्पटानाञ्च पेटकैः पाशिकशिशूनामटद्भि-
स्तृणस्तम्भान्तरिततित्तिरीतरलायमानकौलेयककुलानां चात-
कैश्च मृगमृगयाश्वगयुयुत्रभिः क्रीड़द्भिः परिणतचक्रवाककण्ठ-
कषायरुचाञ्च शीतधुव्यानां वल्कलानां कलापान् नातिचिरो-
द्धृतानाञ्च धातुत्विषां धातकीकुसुमानां मणिता गोणीः पीत-
व्यानाञ्चातसीशणपट्टपूलकानां पुष्कलानां सम्भारांश्च मधुनो-
माक्षिकस्य मायूराङ्गस्य शिष्टमधूच्छिष्टचक्रिकामालानाञ्च
लम्बमानलामज्जकपुञ्जजटालानां पक्वत्वचाङ्खदिरकाष्ठानां
कुष्ठस्य च कठोरकेसरिसटाभारबभ्रूणाञ्च भूयसो भारकान्
लोध्रस्य लोकेनादाय व्रजता प्रविशता विविधवनफलपूरित-
विकटमस्तकाभिरभ्यर्णग्रामगत्वरीभिः सत्वरमाणाभिर्विक्रय-
चिन्ताव्यग्रग्रामटिकाभिर्व्याप्तदिगन्तरमितस्ततश्च युक्तशूकशा-
कराणां पुराणपांसूत्करकरीषकूटवाहिनीनां धूर्गतधूली-
धूसरसारथिसैरिकसरोषस्वरसार्यमाणानां क्रीड़च्चटुल-
चक्रचीत्कारिणीनाञ्च शकटश्रेणीनां सम्पातैः सम्पाद्यमानबु-
र्ध्नोर्वीचितसंस्कारं अरचितकचिप्रदण्डवासोऽर्पितमान हरि-
णहेलाविलम्बितवैणवप्रभृतिभिश्च निखातगोकण्टकशङ्कुशङ्कि-
तशशकशकलितशृङ्गशृङ्गैः पृथक्पतितविशङ्कटविटपैर्वाटैरे-
ण्डैः सुबद्धश्यामायमानोपकण्ठ मतिविकटप्रकोष्ठान्तरैश्च
मरकतस्निग्धस्नुहिवाटवेष्टितैः कामदुष्कर्मण्यवंशविटपसङ्कटैः
कण्टकिकरञ्जराजिदुष्प्रवेशैरुपगमरूपकवाचावङ्गवंशकसर-
स्तरणशिशुग्रन्थिपर्णगवीथिकागर्भगुल्मगहनैर्गृहवाटकैः निवा-

तोच्चकाष्ठारोपितां काष्ठालुकलताप्रतानप्रच्छादितच्छायैः परिमण्डलबदरीमण्डपतलनिखातखादिरकीलबद्धवत्सरूपैः कथमपि कुक्कुटरटितानुनीयमानसंनिवेशैरङ्काहस्तिस्तम्बविरचितप्रविकावापिकैः प्रकीर्णबदरपटलपाटलैः वेणुकण्डरपुटककमस्थितनलकशमयप्रपं विच्छितभित्तिभिः किंशुकरोचनारचितमण्डनैर्बल्वजबध्याहारराशिभिः शाल्मलीकूलसञ्चयबहुलैः सञ्चितनलशालीशालूककुमुदबीजवेणुतण्डुलैः संगृहीतसालं बीजैर्भस्ममलमलिनकाश्मर्यबीजकूटव्याहतप्रस्तकटैराश्यानराजादनमदनफलस्थितैर्मधूकासवमद्यप्रायैः कुसुम्भकगर्भकुम्भकुशूलैरविरहितराजमाषत्रपुसकर्कटीकूष्माण्डालाबुबीजैः प्रोष्यमाणबिडालमालूरवनककून्नशालिजातकादिभिरटवीकुटुम्बिनां गृहैरुपेतं वनन्ददर्श तत्रैव तं दिवसमत्यवाहयदिति ।

इति श्रीहर्षचरिते दण्डयात्राकथनं नाम सप्तमोच्छ्वासः ।

---

# अष्टमोच्छ्वासः।

सहसा सम्पादयता मनोहरप्रार्थितानि वस्तूनि।
दैवेनापि क्रियते भव्यानां पूर्वसेवेव॥
विद्वज्जनसम्पर्को नचेष्टज्ञातिदर्शनाभ्युदयः।
कस्य नखाय विपिने भवति महारत्नलाभस्य॥

अथापरेद्युरुत्थाय पार्थिवस्तस्मात् ग्रामकान्निर्गत्य विवेश विन्ध्याटवीं अ.ट च तस्यामितस्ततः सुबहून्दिवसान् एकदा तु भूपतिर्भ्रमत एवाटवीवासामन्तस्य शरकेतोः सूनुर्व्याघ्रकेतुर्नामकृतोऽपि कज्जलश्यामलं श्यामलतावलयेनाधिललाटमुसैः कृतमौलिबन्धमन्धकारिणीरूकारणभुवं भ्रूकुटीभङ्गेन त्रिरेखेन त्रियामामिव साहससहचारिणीं ललाटस्थलीं सदा समुद्वहन्तं श्रवतंसितैकशुकपक्षप्रभाहरिताय मानेऽपि नस्त्रकाचमणिकेन श्रवणेन शोभमानं किञ्चित् चित्तस्य चक्षुषः प्रविरलपक्ष्मणः सहजेन रागरोचिषा साधनरसोपयुक्तं ताक्ष्यमिव चतजमिव चान्तमवनाटनासिकाञ्चिपीटाधरनाकिनश्चिबुकमभिन्नानुत्कटकपोलकूटास्थिपर्यन्तमीषदुदग्रग्रीवाबन्धमधस्कन्धस्कन्धार्द्धभागमनवरतकनककोदण्डकुण्डलीकरणकर्कशव्यायामविस्तारितेन मांसलेनोरसा हसन्तमिव तटशिलाप्रथिमानं विन्ध्यगिरेरजगरगरीयसा च भुजयुगलेन तुलयन्तमिव तुहिनशैलसालद्रुमाणां द्राघिमाणं वाराहबालवलितवलयबन्धना-

भिर्नागदमनजटिकाजुटिकाभिर्जटिलीकृतपृष्ठे प्रकोष्ठे प्रतिष्ठाङ्कितं गोदन्तमणिचितत्रपुषं वलयं बिभ्राणं तुन्दिलं तुण्डिभ मभिरमणि चर्मनिर्मितपट्टिकयोञ्चित्रचित्रकार्यकारितपरिवारया मंकुजाजिनजालिकया शृङ्गयमलघटितमुष्टिभागभासुरया पारदरसलेपलिप्तसमस्तस्वस्तिकया कृपाण्या करालितविशङ्कटकटीप्रदेशं प्रथम यौवनोल्लिख्यमानमध्यभागम्रष्टमांसभरिताविव स्थवीयांसौ उदरवहूरण्डौ दधतमच्छभल्लचर्ममयेन भल्लप्रायप्रभूतशरच्छदा शवलशार्दूलचर्मपट्टापीड़ितेनालिकुललम्बमानलोलपृष्ठभागभाजा भस्त्राभरणेन पल्लवितमिव कार्ष्णं सुप्रदर्शयन्त सुरभिभागोत्तंसितचाषपिच्छचारुशेखरे खदिरजटानिर्माणे खुरप्राये प्रचुरमयूरभिया पतत्रताचितत्वचि त्वचि वारगुणे वामस्कन्धाध्यासिनि धनुषि प्रलम्बमानेनेव शिरसा शितशरकृन्तैकनलकविवरप्रवेशिना अङ्काजनितस्वास्तिकबन्धेन बन्धूकलोहितरुधिरराजिरञ्जितग्रावलम्बिना वपुर्वितततिर्यक्तविभाव्यमानकोमलक्रोड़शुक्तिम्ना शशशाताटनिशिखाग्रस्थितग्रीवेण प्रावृत्तचञ्चूत्तानताम्रतालुना तित्तिरिणा वर्णमुष्टिमिव मृगयां दर्शयन्तं विषमविषदूषितवदनेन विकर्णेन कृष्णाहिनेव मूलभृतेन व्यग्रदक्षिणकराभ्रं जङ्गममिव गिरितटतमालपादपं यन्त्रोल्लसितमश्मसारस्तम्भमिव भ्रमन्तमञ्जनलोहस्तम्भच्छेदमिव गलितं विन्ध्याद्रेः प्राकारं कलिकालानां कालपाशं कुरङ्गमयूखानां धूमकेतुं मृगराजचक्राणां महानवमीमहं भीरुण्डानां हृदयमिव हिंसायाः फलमिव पापस्य कारणमिव कालरात्र्याः शबरयुवानमादायाजगाम ।

दूरेच स्थापयित्वा विज्ञापयां बभूव देवास्य सर्व-विन्ध्यारण्यस्य स्वामी सर्वपल्लीपतीनां प्राग्रसरः शबरसेनापति र्भूकम्पोनाम तस्यायं स्वर्धका निर्घातनामा सकलस्यास्य विन्ध्यकान्तारस्य पर्णानां मध्यभिज्ञः किमुत प्रदेशानां एनं पृच्छतु देवः योग्योऽयमाज्ञां कर्त्तुमिति कथिते च तेन निर्घातः क्षितितलविनिहितमौलिः प्रणाममकरोत्। उपनिन्येच तित्तिरिणां सहस्रं शशोपायनं अवनिपतिस्तु समानघनः स्वयमेव तमप्राक्षीत् अङ्गाभिज्ञा यूयमस्य सर्वस्योद्देशस्य निहारशीलाश्च दिवसेष्वेषु भवन्तः सेनापतेर्वान्यस्य वा त्वदुपजीविनः कस्यचित् भट्टारकापि वनारिनगतापि वेददर्शनगोचरमिति निर्घातस्तु भूपालालापप्रसादेनात्मानं बहुमान्यमानः पुनरपि प्रणामादर्शितादरश्च विज्ञापयामास देव! प्रायेणाद्य हरिण्योऽपि नापरिगताः सञ्चरन्ति सेनापतिना कृतएवनार्यः नास्त्येवं रूपा काचिदबला तथापि निदेशादिदानीमन्वेषणं प्रतिदिशं तवकृत्यैः क्रियते यत्नः ततश्च गव्यूतिमात्रे मुनिर्माणते महति महीधरमालामूलरूढि महीरुहां षण्डे पिण्डपातिप्रभृतान्तेवासिपरिवृतपाराशरीद्विवाकामित्रनामा गिरिजघनमाश्रित्य प्रतिवसति स विन्देद्वार्तामिति तच्छ्रुत्वा नरपतिरचिन्तयत् श्रूयते हि ततो भवनं सुरूटीतनाम्नः स्वर्गतस्य ग्रहवर्मणो बालमित्रं मैत्रायाणी यस्त्रयीमपहाय ब्राह्मणायतनोविद्वानुत्पन्नसमाधिः सौगते मते कुवेव काषायाणि गृहीतवानिति प्रेयांश्च जनस्य जनयति सुहृदपि दृष्टोहमामाश्वासं अभिगमनीयाश्च गुणाः सर्वस्य कस्य न प्रतीक्ष्योमुनिभावोभगवति! वैधेये! विधर्मग्राहिणी गरिमाणमुत्पादयतीत्यादि प्रकारश्चाब्रवीत् भद्र! समुद्दिश

तमुद्देशं यत्रास्ते सपिण्डपातीत्युक्त्वा तेनोपदिश्यमानवर्त्मा प्रववृते गन्तुम् ।

अथ क्रमेण गच्छत एवास्यानवकेशिनः कुड्मलितकर्णिकाराः स्थितफलेग्रहयः फलभरनमिततरवो नीलदला नालिकेरनिकराः करिकेसरवलपरिसराः कोरकनिकुरम्बरोमाञ्चितकुरबकराजयो रक्ताशोकपल्लवलावण्यलिप्यमानदिशः प्रविकसितकेसररजोविसरवर्द्धमानवासरधूसरिमाणः खरजसःसिक्ततिलाः प्रतिगलितहिङ्गवः प्रसवधूलिपिङ्गलप्रियङ्गवः परागपिञ्जरमञ्जरीपुञ्ज्यमानमयूरपुञ्जशिञ्जाजनितजनमुदोमदमत्तमिलितमेचकितमुचुकुन्दकुन्दकाण्डकर्ण्यमाणा निःशङ्कारिकरटतटकण्डूतय आप्यायमानचटुलकणसारशावकशवग्राहवलसुभगभ्रमयस्तमःकालतमतमालमालामिलितातपासवकदन्तुरितदेवदारुतरवस्तृणताम्बूलिस्तम्बजालकितजम्बूजम्बीरवीथयः कुसुमधूलिधालकदम्बचक्रचुम्बितव्योमानो बहलमधुमोचोच्चितवितयः परिमलघटितप्राणात्मयः कतिपयदिवसप्रसूनकं ककुटिकुटीकृतकूटजकोटराश्चटकसन्धार्यमाणा चाटचाटकैरक्रियमाणचाटवः सहचरीसहचरचञ्चूचकोरचञ्चवो निर्भयभूरिभेरुण्डभूयमानपाकपिलवः सदाफलकखञ्जफलवहुलाः फलविग्रसनिःशूकशुकशकुन्तशातितशलाटवः शेफालिकाशिफाविवरविश्वाविसर्ज्यमानगैरिकराशयः शैलेयसुकुमारशिलातलसुखशायितशशवो निरातङ्करङ्कवो निराकुलनकुलकेलयः कलकोकिलकुलकलकलकलितोद्दामाः सहकारामरोमन्थायमानचमरीयूथा यथासुखनिषसतवृषगण्डखड्गमण्डलाः निर्विकारवृकविलोक्यमानमृगपोतपीतगवयधेनवः-

अवगाहारिसनीरगिरिनितम्बनिर्झरनिनादनिद्रानन्दायमान-
करिकुलतालदुन्दुभयः समासन्नगीतकितकिन्नरगीतरवरममा-
णरुरवः प्रमुदिततरतरक्षवः चतरहरितहरिद्राद्रवरज्यमान-
वराहपोतपोतावलयो गुञ्जागुञ्जगुञ्जञ्जाहकाशजातिजालक-
सुमशारिजातजातयो दंशककुपितकपोतपेटकपाटितपालकी-
टपुटकाः लिकुचलञ्छनलम्पटगोलाङ्गूललङ्घ्यमानलवलयो बद्धबा-
लुकालवालवलयाः कुटिलकुल्यावलिवलितबालकितनदीकाः
स्रोतसोनिबिडशाखाकाण्डलम्बमानकमण्डलवः सूत्रमाणिक्या-
सक्तरिक्तभिक्षाकपालपल्लवितलतामण्डपाः निकटकुटीकृतपाट-
लमुद्राचैत्यमुक्तय श्चीवराम्बरकाषायोदकदूषितोद्देशा मेघमया
इव कृतशिखण्डिकोलाहला वेदमयाइवापरिमितशाखाभेदग-
हना माणिक्यमया इव महानीलतनवस्तिमिरमया इव सकल-
जननयनमुषो यामुनमहाह्रदा इवोर्द्धीकृता मरकतमणिश्या-
मलालाः क्रीडापर्वता इव वसन्तस्याञ्जनाचला इव पल्लविता
स्तनया इवाटवीजाता विन्ध्याद्रेः पातालान्धकारराशय इव भित्वा
भुवमुत्थिताः प्रतिवेशका इव वर्षावासराणामङ्कावतारा इव
कृष्णार्द्धरात्राणामिन्द्रनीलमयाः प्रासादा इव वनदेवतानां पुर-
स्तादृश्यनपथमवतेरुस्तरवः ।

ततोनरपतेरभवन्मनसि अदूरवर्तिना खलु भवि-
तव्यं भवतेति अवतीर्य च गिरिसरिति समुपस्पृश्य युग-
पद्विश्रमसमयसमुक्तक्ष्वेषाघोषवधिरीकृताटवीजगहने तस्मि-
न्नेव प्रदेशे स्नापयित्वा वाजिसैन्यमवलम्ब्य तपस्विजनदर्शनेऽपि
तं विनयं हृदयेन दक्षिणेन च हस्तेन माधवगुप्तमंसे विरचै

रैव वाजिभिरनुगम्यमानश्चरणाभ्यामेव प्रावर्तत गन्तुं अथ तेषां
तरूणां मध्ये नानादेशीयैः स्थानस्थानेषु स्थाणुनाश्रितैः शिला-
तलेषूपविष्टैर्लतावनान्यर्चयद्भिररण्यनिकुञ्जेषु निलीनैर्विटपच्छायासु निषण्णैस्तरुमूलानि निषेवमाणैर्वीतरागैरार्हतैर्म-
स्करिभिः श्वेतपटैर्महापाशुपतैः पाण्डरीभिक्षुभिर्भागवतै-
र्वर्णिभिः केशलुञ्चनैर्लौकायतिकैः कापिलैः काणादैरौपनिषदै-
रीश्वरकारिभिर्धर्मशास्त्रिभिः पौराणिकैः साप्ततन्तवैः शाब्दैः
पाञ्चरात्रिकैर्वैखानसैर्वानप्रस्थैरन्यैश्च स्वान् स्वान् सिद्धान्तान् शृ-
ण्वद्भिरभियुक्तैश्चिन्तयद्भिश्च प्रतिरचद्भिश्च संशयानैश्च निश्चिन्वद्भि-
र्व्युत्पादयद्भिर्विवदमानैश्चाभ्यस्यद्भिश्च व्याचक्षाणैश्च शिष्यतां प्रति-
पन्नैश्च दूरादेवावेद्यमानमतिनिशितैः कविभिरपि चैत्यकर्म कु-
र्वाणैस्त्रयीशरणपरैः परमोपासकैः शुकैरपि शाक्यशासनकु-
शलैः कोशमुपदिशद्भिश्च शिक्षापदोपदेशदोषोपशमशालिनी-
भिः शारीकाभिरभि धर्मदर्शनानि दर्शयन्तीभिश्चानवरतश्रवण
गृहीतानि कौशिकैरपि बोधिसत्त्वजातकानि जल्पद्भिर्जात-
सौगतशीलशीतलस्वभावैर्दूतैरप्यमांसाशिभिरुपास्यमानमास-
नोपान्तविश्रब्धसुप्तानेककेसरिशावकतया मुनिपरमेश्वरमकृत्रि-
मइव सिंहासने निषण्णमुपशममिव पिबद्भिर्वनहरिणैर्जि-
ह्वालताभिर्लिह्यमानपादपल्लवं वामकरतलनिविष्टेन नीवारा-
नम्नता पारावतपोतेन कर्णोत्पलेनेव प्रियां मैत्रीं प्रसाधयन्त-
मितरकरकिसलयेन नखमयूखलेखाजनितजलव्यायाममोह-
मुद्ग्रीवं मायूरं मरकतमणिकरकमिव वारिधाराभिः पूरयन्त-
मितस्ततः पिपीलिकाश्रेणीनां श्यामाकतिलतण्डुलकणान्
स्वयमेव विकिरन्तं मरुणतरवटेन प्रथीयसा संवीतं बहल-

बालातपविक्षिप्तमिव पौरन्दरं दिग्विभागमुल्लिखितपद्मराग-
प्रभाप्रतिमया रक्तावदातदेहप्रभया पाटलीकृतानां काषायमिव
दिशामवदिशन्त मनौद्धत्यादधोमुखेन मुदमुकुलितकुमुदाक-
राकारेणस्निग्धधवलप्रसन्नेन चक्षुषा जन्तुक्षुद्रदक्षणां जी-
वनार्थममृतमिव वर्षन्तं सर्वशास्त्रार्थपरमाणुभिरिव नि-
र्मितं परमसौगतमप्यनवलोकितेश्वरमचलितं मनस्यस्खलितं
तपसि लग्नं महसि आलोकमिव यथार्थस्थितसकलपदार्थ-
प्रकाशकं दर्शनार्थिनां सुगतस्यापि संयमनमिव धर्मस्याप्यारा-
धनीयमिव प्रसादस्यापि प्रसादनीयमिव वन्द्यत्वस्यापि वन्दनीय-
मात्मनोऽपि स्पृहणीयमिव ध्यानस्यापि ध्येयमिव विज्ञानस्यापि
विज्ञेयमिव जन्म जपस्यापि धर्मस्य तत्त्वं तपःशरीरं शौचस्य
कौशलस्य वेश्म विश्वासस्य सर्वस्वं सुवृत्ततायाः दाशेरं दाक्षिण्यस्य
परम्परानुकम्पायाः मध्यमे वयसि वर्तमानं दिवाकरमित्रम-
द्राक्षीत् ।

अत्र प्रशान्तगम्भीराकारारोपितः सादरं दूरादेव समं
शिरसा वचसा ववन्दे । दिवाकरमित्रस्तु मैत्रीमयः प्रकृत्या विशेष-
तस्तेनापरेणापूर्वेण मानुषलोकोचितेन सर्वाभिभाविना महानु-
भावाभोगभाजा भ्राजिष्णुना भूपतिना प्रकृतेनाकारविशेषेण
तेन चाभिजात्यप्रकाशकेन गरीयसा प्रायेणाह्लादितचक्षुषि
तेजसि च युगपदेव शाहितधीरस्वभावोऽपि सम्पादितससम्भ्रमा-
भ्युत्थानः सङ्कल्प्य किञ्चिदुद्गमनवेगविलोललम्बमानांसा-
र्पितश्चीवरपटान्तमुत्क्षिप्यानेकाभयदीक्षादक्षिणं महापुरुषल-
क्षणलेखया प्रशस्तहस्तं स्निग्धमधुरवाचा सगौरवमारोग्य-
दानेन राजानमन्वग्रहीत् । अभ्यनन्दच्च स्वागतगिरा गुरुमि-

वाभ्यागतं बहुमन्यमानस्तेनैवासनेनास्वाचेति निमन्त्रयाञ्चकार पार्श्वस्थितं च शिष्यमब्रवीत् आयुष्मन्नुपानय कमण्डलुना पादोदकमिति राजा त्वचिन्तयत् अलोभः खलु संयमनपाशस्तौजन्यमभीतानां स्थाने खलु तत्रभवान् गुणानुरागी ग्टहवेमा बहुशो वर्णितवानस्य गुणानिति प्रकाशञ्च बभाषे भगवन्! दन्तदर्शनपुण्यानुग्टहीतस्य मम पुनरुक्तइवायमार्थप्रयुक्तः प्रणिपात्यमुग्रहयत्नुः प्रदानप्रसादस्तीकतस्य उपरि कथानिवारणादिदानोपचारादिव चेष्टितमतिभ्रमिरेव भवादृशां पुरः सम्भाषणामृताभिषेकप्रक्षालितसकलवपुषश्च मे प्रदेशष्टन्तिपाद्यमय्यपार्थकम् आसतां भवन्तोयथासुख मासीनोऽहमित्यभिधाय क्षिताबेवोपाविशत्।

अलङ्कारो हि प्रभवतां परमार्थतः प्रश्रयातिशयोरत्नादिकन्तु शिलाभार इति आकलय्य मुनः पुनरभ्यर्थमानोऽपि यदा न प्रत्यपद्यत पार्थिवो वचनन्तदा स्वयमेवासनन्मोक्ते भजन्तं भूपतिमुखनलिन'निहितनिभृतनयनयुगलमिश्चलकृतहृदयस्थित्वा काश्चित्तु कालकलां कलिकल्मषकालुष्यमिदाक्षालयत् अमलाभिर्दन्तमयूखमालाभिर्मूलकलाभ्यवहारसम्भवसुह्रमस्विव परिमलसुभगं विकचकुसुमपटलपाण्डुरम् लतावनमवादीत्। अद्य प्रभृति न केवलमयमभिनन्द्योवन्द्योऽपि खलु प्रकाशितसारः संसारः किन्नाम नालोक्यते जीवद्भिः अद्भुतरूपमनुचिन्तितोपनतपथमुपागतं एवम्विधैरनुमीयन्ते जन्मान्तरावस्थासु कृतानि सुकृतानि हृदयोत्सवैरिहापि जन्मनि दत्तमेवास्माकममुना तपःक्लेशफलमसुलभदर्शनं दर्शयतां देवानां प्रियमात्मनेरापीत मभ्रतं ईक्षणाभ्यां जातं निरुत्कण्ठं मान-

सनिर्वृतिसुखस्य मच्छ्रिः पुण्यैर्विना न विश्राम्यन्ति सज्जने त्वा-दृशि सुदिवसः यस्मिन् जातोऽसि सा सुजाता जननी या सकल लोकजीवितानन्दजननमजनयदायुष्मन्तं पुण्यवन्ति पुण्यानि तानि एषामसि परिणामः सुकृततपसस्ते रूपनिर्माणपरमा-णवः परिग्टहीता येन त्वया तद्भाग्यं सौभाग्य माश्रितोऽसि येन भव्यः स पुरुषभावो भवति व्यवस्थितोयत् मुमुक्षोरपि मे पुण्य-भाजमालोक्य पुनःश्रद्धा जाता मज्जन्मनि नेच्छद्भिरप्यस्माभिर्दृष्टः कुसुमायुधः कृतार्थमद्य चक्षुर्वनदेवतानां अद्य सफलं जन्म पा-दपानां एषामसि गतो गोचरं अमृतमयस्य भवतो वचसां माधु-र्यमवधार्यमेव अस्य त्वादृशि शैशवेऽपि विनयस्योत्पादकं पदार्थं ध्य.यं ध्यायमपि न सम्भावयति भुवि सर्वथाशून्य आसीदजायत-दीर्घायुषि गुणग्रामधन्यः स भूभृत् यस्य वंशे मुक्तामयःसम्भू-तोऽसि एवम्विधस्य पुण्यवतः कथमपि प्राप्तस्य केन प्रियमाचराम इति पारिप्लवच्चेतो नः सकलवनचरणार्थं साधारणस्य कन्दमूल-फलस्य वा गिरिसरिदम्भसो वा केयं मम परोपकारिणी कृतसु कायकलिरस्मरत्।

करसर्वस्व मवशिष्टातिथ्याय स्वायत्ताश्च विद्याविन्दजः कतिचिदुपयोगन्तु प्रीतिन्न विचारयन्ति स्वीक्रियतां यदलो-पयोगार्हं यदि नोपपद्यते किञ्चिदर्थलवमरक्षणीयाक्षरं वा कथनीयमिदमपि वा ततः श्रोतुमभिलषितहृदयसर्वस्व मिदन्नः केन कृत्यन्न हारेण भव्येन भूषितवान् भूमिना मनोऽग्रे-सरेणानेन मधुरसविदुरमिव हृदयप्रतिकरमनवरतं वर्षितव-चसेव सर्वमनुष्ठितं धन्योऽस्मि यदेवमभ्यर्हितभ्रमवानुपचारि-णीयमपि मान्योमान्यते मामस्य र मह्यावनपरिभ्रमणस्य च

कारणमवधारयतु मतिमान् मम हि विनष्टनिखिलेष्टबन्धो- र्जीवितानुबन्धस्य निबन्धनं कैव यवीयसी स्वसावशिष्टा सा च भर्तृवियोगाद्वैरिभवनात् भ्रमन्ती विन्ध्यवनमग्नुभयशरवलब- हुलयितगजकुलकलितमपरिमितमृगपतिशरभभयमुखर्माहिष- सुषितपथिकगमनमतिनिश्चितशरकुशपरुषं वटशतविषं अवि- शदयोगात् अतस्तामन्वेष्टुं वयं निशि निशि च सतत मटा- मो नचासादयामः कथयतु गुरुरपि यदि कदाचित् कुतश्चि- द्वने चरतः श्रुतिपथमुपगता तत्प्रवृत्तिरिति ।

अथ तच्छ्रुत्वा जातोद्वेग इव पुनरप्यवादीत् धीमन्न खलु कश्चिदेवं भूतो वृत्तान्तोऽस्मानप्युपागतः अभाजनं हि वयमीदृशानां प्रियाख्यानोपायनानां भवतइत्येवं भाषमाण एव तस्मिन्नकस्माद्देशागत्यापरः शमिनि वयसि वर्तमानः सम्भ्रान्त इव पुरस्तादुपरचिताञ्जलिः जातकरुणाम्बुः प्रव- र्त्तिं चक्षुषि भिक्षुरभाषत भगवन् ! अतिकरुणं कर्म वर्तते बालैव बलवद्व्यसनाभिभूता अश्रुतपूर्वा कल्या- णरूपा अतिशोकावेगविवशा वैश्वानरं विशति सद्भावयतु तां प्रोषितप्राणां भगवानभ्यपद्यताश्च समुचितैः समाश्वासै- रनुपरतमपूर्वकृमिमिकीटमपि दुःखितं दयालोरार्यस्य दृष्टिगो- चरं गतमिति राजा तु निजानुजाशङ्कसौदर्यस्नेहोदन्तवद्द्रुत इव दुःखेन दोधूयमानहृदयः कथमपि गद्गदिकागृहीतकण्ठो विकलवाक् वाष्पाधानदृष्टिः पप्रच्छ पराशरिन् कियद्दूरे सा योषिदेवं जातीया जीवेद्वा इति पृष्टा वा त्वया कासि कावससि- क्रिमर्थं वा वनमुपागतासि वा किन्निमित्त मनलमिति इदमा दितश्च प्रभृति कात्स्न्र्येन कथ्यमानमिच्छामः श्रोतुं कथमार्यः

गता दर्शनगोचरं आकारतश्च कीदृशीत्यभिहितश्च भूभुजा भिक्षुराचचक्षे ।

महाभाग ! श्रूयतां अहं प्रत्यूषस्येव वन्दित्वा अनेनैव गिरिनदीरोधसा सैकतसुकुमारेण यदृच्छया विहरन्नातिदूरमेकस्मिन्वनलतागहने गिरिसमीपभाजि भ्रमरिणामिव हिमहतिकमलाकरकातराणां रसितं सायमानानामतितारतानानुवर्तिनीनां वर्णतन्त्रीणामिव झङ्कारमेकताननारीणां रुदितरवमश्रुतिकरमतिकरुणमाकर्णितवान् । उपजातकौतूहलश्च गतोऽस्मि तं प्रदेशं दृष्टवानस्मि च दृषत्खण्डखण्डिताङ्गुलिभिः लोहितेन पार्ष्णिप्रविष्टशरशलाकाशल्यशुकसङ्कोचितचक्षुषाध्वनीनश्रमश्लथनिश्चलचरणेन स्थानव्रणव्यथितगुल्फबद्धभूर्जत्वचा पातकण्टकवेदखञ्जजङ्घाजातज्वरेण पर्पाट मृदुपाण्डुरपिण्डकेनाच्छकज्जलजर्जरितजानुना च शतावरीदारिषतीरूपा च विदारितारिदुकूलेनोत्कोटिभिः पादितकञ्चुकपटेन च फललोभावलम्बितवनदरीलताजालकैरुल्लिखितसुकुमारोदरेण च कुरङ्गशृङ्गोत्खातैः कन्दमूलफलैः कदर्थितबाहुना च ताम्बूलविरहविषमरदखण्डितकोमलामलकीफले च कुशकुसुमाहतिलोहितानां श्रयतामक्ष्णां खेपीकृतमनःशिलेन कष्टवकीव तालुनालकक्लेशेन च केनचित्किसलयोपपादितातपत्रकृत्येन केनचित् कदलीदलव्यजनशान्तिना केनचित् कमलिनीदलपुटभृतमिताम्भसा केनचित् पाथेयीकृतमृणालपूलिकेन केनचित् अंशुकदशाशीर्णनिहितनालिकेरकोशकलशीकलितसरसतैलेन कतिपयावशेषशोकविकलकलमूककुब्जवामनवधिरवर्बरविरलेनाबालानां चक्रवालेनाप्रावृतामापत्कापि कुलोद्गतेनि-

वामुच्यमानां लावण्येन प्रभाक्षेपितप्रतिबिम्बितैरासन्नलताकि-
सलयैर्दुःखवितैरिवान्तःपाटलीकृतायामपि निश्छायमुखमुद्व-
हन्तीमटवीशून्यतयातिशयानां चित्रमयीमिव निश्चेतनतया मरु-
न्मयीमिव श्वाससम्पदा पाकमयीमिव सन्तापं वहतानेन सलि-
लमयीमिवाश्रुप्रसरेण वियन्मयीमिव निरालम्बत्वेन तड़िन्मयी-
मिवापरि प्लवतया शब्दमयीमिव परिदेवितबाहुल्येन मुक्तां-
शुकरत्नकुसुमकनकपत्राभरणां कल्पलतामिव बाहुल्येन महा-
वने पतितां परमेश्वरोत्तमाङ्गपातदुर्लङ्घितां गङ्गामिव वनकु-
सुमधूलिधूसरितपादपल्लवां प्रभातचन्द्रमूर्तिमिव लोकान्तरम-
भिलषन्तीं निजजलमोचकधवलायितनेत्रशोभां मन्दाकिनी-
मृणालिनीमिव म्लानां दुःसहरविकिरणसंस्पर्शखेदनिमीलितां
कुमुदिनीमिव दुःखेन दिवसं नयन्तीं दण्डदशापिसम्पादितां
प्रत्यूषदीपशिखामिव क्षामपाण्डरवपुषं पार्श्ववर्तिवारणाभि-
योगरक्ष्यमाणां वनकरिणीमिव दुःखमहाह्रदे निमग्नां प्रविष्टां
वनगहने ध्याने च स्थितां तरुतले मरणे च पतितां धातुसङ्के
महत्यनर्थे च दूरीकृतां भर्त्रा सुखेन च निर्वेदितां श्रमखेना-
युषा चाकुलां केशकलापेन मरणोपायेन च विवर्णीकृतामध्व-
धूलिभिरङ्गखेदनाभिश्च निर्दग्धां चण्डातपेन वैधव्येन च धृतमुखीं
पाणिना मौनेन च गृहीतां प्रियसखीजनेन मन्युना च तथा भ्रष्टैः
बन्धुभिर्विलासैश्च विमुक्तेन श्रवणयुगलेनात्मना च परित्यक्तैर्भू-
षणैः सर्वारम्भैश्च भग्नैर्वलयैर्मनोरथैश्च चरणलग्नाभिर्दर्भाङ्कुर-
सूचिभिश्च हृदयनिहितेन चक्षुषा प्रियेण च दीर्घैश्च सितैरलकैः
क्षीणेन वपुषा पुण्येन च पादयोः पतन्तीभिश्च स्वल्पावशेषेण
परिजनेन जीवितेन चालसामुन्मेषे दत्तामश्रुमोक्षे सक्तां चि-

न्तासु विच्छिन्नामाशासु कृशां कायेन स्थूलां श्वसितेन पूरितां दुःखेन रिक्तां सत्वेनाध्यासितां मायासेन शून्यां हृदयेन निश्चलेन चलितां धैर्यादपि च वसतिं व्यसनानामाधारमाधीनामास्थानमवस्थानामायतनं धृतीनामावासमवसादाना-मापणमापदामधियोग्यायोग्यानामुद्योगमुद्वेगानां कारणं करुणायाः पदं परयत्नतायाः योषितं दृष्ट्वा चिन्तितवानस्मि चित्रमीदृशी मप्याकृति मुपतापाः स्पृशन्ति सा तु समीपमुपगते मयि तदवस्थापि सबहुमानावनमितमौलिः प्रणमति अहन्तु तत्प्रबलकरुणाप्रेर्यमाणा तामालपितुकामः कृतवान्मनसि कथमिव महानुभावामेनां मन्त्रये वत्सेत्यतिप्रणयः मातरिति चाटुः भगिनीत्यात्मसम्भावना देवीति परिजनालापः राजपुत्रीत्यस्फुट उपासिकेति स्वकीयमनोरथः स्वामिनीति भृत्यभावाभ्युपगमः भद्रेति इतरस्त्रीसमुचितं आयुष्मतीत्यस्यामवस्थायामप्रियकल्याणीति दशाविरुद्धं चन्द्रमुखीत्ययुक्तवचः बालेत्यगौरवोपेतं आर्येति जरारोपणं पुण्यवतीति फलविपरीतं भवतीति सर्वजनसाधारणम्।

अपिच कासीत्यनभिजातं किमर्थं रोदिषि दुःखकारणकारि मारोदीरिति शोकहेतुमनपनीय न शोभते समाश्वसिहीति किमाश्रित्य समाश्वसयामि स्वागतमिति यातायातं सुखमास्वेति मिथ्या इत्येवं चिन्तयत्येव मयि तस्मात् स्त्रैणादुत्थायान्यतरा योषिदार्त्तेरूपेव शोकविक्लवा मां समुपसृत्य कतिपयपलितशारितं शिरो नीत्वा महीतल मतुलसन्तापसूचकैरश्रुबिन्दुभिर्दहन्तीव मे चरणयुगलमतिकृपणैरक्षरैश्च हृदयमभिच्छितवती भगवन्! सर्वसत्वानुकम्पिनी प्रायः प्रव्रज्याप्रपन्न

दुःखतपशीदादवाश्च भवन्ति अनघाः करुणा कुशलहृच्च भगवतः शाक्यमुनेः शासनं सकलजनोपकारसज्जाच मैत्री परलोकसाधनञ्च धनं धर्मो मुनीनां प्राणपरिरक्षणाच्च नापरं पुण्यबहुजातं जगति गीयते जनैन अनुकम्पाभूमयश्च प्रकृत्यैव युवतयः किं पुनर्विपत्त्यभिभूताः साधुजनश्च सिद्धिहेतुमार्यवचसां यत इयं नः स्वामिनी मरणेन च मातुः प्रवसनेन च पितुरभावेन च भर्तुः परलोकगमनेन च भ्रातुर्भ्रंशेन च शेषस्य बान्धववर्गस्यातिदुःखदुःहृदयतया चानपत्यतया च निरवलम्बना परिभवेन च नीचारातिकृतेन च प्रकृत्या मनस्विनी अमुना महताऽटवीपर्यटनक्लेशेन कदर्थितसौकुमार्या दग्धदैवदत्तैरेवं बहुभिरपराधपरिव्यसनैर्विक्लवीकृतहृदया दारुणदुःखमपारयन्तीमनाक्रान्तपूर्वं स्वप्नमप्यविगणय्य गुरुजनमननुनयन्ती खण्डितप्रणया नस्त्वमपि समवधूय सखीभिर्विज्ञाप्यं शरणमनाथमश्रुव्याकुलनयनमभूतपूर्वं मनसापि परिभूय भृत्यवर्गमग्निं प्रविशति परित्रायतामार्योऽपि तावदस्याः शोकापनयनोपायोपदेशनिपुणां व्यापारयतु वाणीमिति अस्याः कृपणं व्याहरन्तीमुत्थाय्योद्विग्नतरः शनैः शनै रभिहितवान् ।

आर्ये! यथा कथयसि तथास्मद्गिरामगोचरोऽयमस्याः पुण्याशयायाः शक्यो चेन्मुहूर्तमात्रमपि त्रातुमुपरिष्टान्न हृथेत्यभ्यर्थना भविष्यति मम हि गुरुरपरः भगवान् सुगतः समीपत एव वसतिस्म स कथितएवास्मिन्वृत्तान्ते नियतमागमिष्यति परमदुःखान्धकारभिदुरैः सौगतैः सुभाषितैश्च स्वकीयैश्च दर्शितनिदर्शनैश्च नानागमगुरुभिर्गिरां कौशलैः कुशलशीलामेनां प्रबोधपदवीमवतारयिष्यतीति तच्छ्रुत्वा त्वरता-

मार्य इत्यभिदधाना सा पुनरपि मे पादयोः पतितवती सोऽहमागत्य त्वरमाणो व्यतिकरमश्रुतिकरमंग्रक्रपणं युवती-मरणमत्र भवते गुरवे निवेदितवानिति ।

अथ भूभृद्दैवमिव मवधार्य तद्भाषित मश्रुतेऽपि स्वसुर्न्ना-म्नि निम्नीकृतमनाः सर्वाकारसम्बादिन्या तयैव दूरीकृतसन्देहो दग्धः सोदर्यावस्थाश्रवणेन श्रवणयोराचार्यमवादीत् आचार्य! नियतं सैवेयमनार्यस्यास्य जनस्यातिकठिनहृदयस्यातिनृशंसस्य मन्दभाग्यस्य भगिनी अभागधेयैरेतामवस्थां नीता निष्कारण वैरिभिर्वराकिविदार्यमाणं हृदयमेव निवेदयतीत्युक्त्वा तमपि-श्रमणमभ्ययात् आर्योत्तिष्ठ कथयतः सास्य प्रभूतप्राणपरित्याग-पुण्योपार्जने यामो यदि कथञ्चित् जीवन्तीं सम्भावयाम इति भाषमाण एवोत्तस्थौ ।

अथ समग्रशिष्यवर्गानुगतेनाचार्येण तुरङ्गेभ्यश्चावतीर्य समभिसन्नलोकेन पश्चादाक्रुष्यमाणप्राञ्चिधेनानुगम्यमानः पुरस्ताच्च तेन शाक्यपुत्रीयेण प्रदर्श्यमानवर्त्मा पद्भ्यामेव तं प्रदेशं अविरलैः पदैः पिवन्निव प्रावर्त्तत क्रमेणैव समीपमुपगतः । शुश्राव लतावनान्तरितस्य सुमोर्षोर्मन्दतरस्वरेणास्य तत्कालोचि-तानालापान् तथाहि भगवन्! धर्मधाव शीघ्रं क्वासि कुलदेवते! देवि धरणि! धारयसि न दुःखितां दुहितरं तु खलु प्रेषिता पुष्पभूतिकुलकुटुम्बिनी लक्ष्मी रथानां नाथसुखरवसुविविधा-धुरां वधूं विधवां बोधयसि किमिति न मां भगवन्! भक्तजने सञ्चरिणि सुगत! सुप्तोऽसि राजधर्म पुष्पभूतिभवनपक्षपातिन् छदाहृतोऽसि कथं त्वय्यपि विपद्बान्धवा वन्ध्याः मात! मां कुटन्तीन्न शृणोषि मामापत्पतितां पतङ्ग! प्रसीद पाहि पतिव्रतामशरणा

मप्रयत्नरक्षितकृतघ्नचारित्रचण्डाल ! न रक्षसि राजपुत्रीं कि-
मिव धृतलवणैर्महादेवी दुहितृस्नेहं छिन्धि यशोवति ! मुषि-
तासि दग्धदैवदस्युना दुहितरि दह्यमानायां नापतसि प्रता-
पशीलशिथिलीभूतमपत्यं महाराजस्य राज्यवर्द्धन ! न धावसि
मन्दीभूता भगिनीप्रीतिरहोनिष्ठुरः प्रेतभावः व्यपेहि पाप !
पावक ! स्त्रीघातक ! निर्घृण ! लज्जसे तातपादं दाहितवानस्मि
सर्वाय दूतं देवीदाहं देशाय दुःखितजनार्तिहराय हर्षाय
नितान्तनिःशूकशोकस्व पावक ! सकामोऽसि दुःखदायिनि-
योगराक्षस ! सन्तुष्टोऽसि विजने वने कमाददामि कस्मै कथ-
यामि कमुपयामि शरणं कां दिशं प्रतिपद्ये करोमि वा किं-
भागधेया ।

अपिच गन्धारिके ! गृहीतोऽयं लतापाशः पिशाचमोच-
निके ! मुञ्च शाखाग्रहणकलशं कलहंसिके ! किमप्युत्तमाङ्गं
मङ्गलिके ! किं मुक्ताकण्ठमद्यापि रुद्यसे सिन्दूरिके ! दूरीभवति
सखीसार्थः स्थास्यति कथमशिवे शवशिबिरे शबरिके ! सुतनु-
तानुपातिपतिशाकासि त्वमपि कपालिके ! उपास्वातां मालतीं
मातङ्गिके ! अङ्गीकृतस्त्वयापत्युर्वत्मैव वत्सिके ! कथमनभिप्रेते
वत्स्यसि प्रेतनगरे नागरिके ! गरिमाणमागतासि अनया
स्वामिभक्त्या सुराजिके ! विराजितासि तेन राजपुत्रीविपदि
जीवितव्ययव्यवसायेन भूपतिनाभ्युद्यमाभिद्ये भृङ्गारधारिणि !
धन्यासि कैरपि के कुतः पुनरीदृशी स्वप्नेऽपि न स्वामिनि !
मेनके ! जन्मनि देवीदास्यमेव ददातु देवो देहं दहनः विजये
विजयशयानुं सानुमति ! नमति दौवारिकां दिवं गन्तुकामा
दासि देहि दहनप्रदक्षिणावकाशं कुशलङ्के कुशानुपवल्लि-

विकिर कुरङ्गिके ! कुरु कुरवककोरककोञ्चितां चितां चामरग्राहिणि ! मृदाना पुनरपि कठिनं कण्ठे कर्षयितव्यानि निर्मदनमर्मनिर्मितानि निर्मर्यादहसितानि भद्रे ! भद्रमस्तु परलोकगमनं ग्रामेधि ! गुणानुरागिणि ! गच्छ सुगतिं वासन्तिके ! अन्तरं प्रयच्छाष्टच्छते वस्त्रधारिणि । देहि दृष्टिमिष्टां तव त्यजति जीवितं विजयसेना मुक्तकण्ठमारटति निकटे ते नाकसूत्रधारिणि ! पादयोः पतति ताम्बूलकरङ्कवाहिका बहुशः बहुमता राजपुत्रा प्रतिलेखालिङ्गसेने ! मृणालिके ! मार्जयसि कतिकृत्वः सुदुःसहदुःखसहस्राश्रुदग्धचक्षुरिदं रोदिषि कियद्दाक्षिण्यं निर्माणमीदृशं प्रायशो यशोधने ! धारयस्यद्यापि किं मां माधविके ! किमियमवस्थासापमानाङ्गतः स कालः कालीन्दि ! सखीजनानुयाताञ्जलिना मुक्तिके ! मत्तपालिके ! कृताः पृष्ठतः प्रणयिनीप्रणिपातानुरोधाः शिथिलय चकोरवति ! चरणग्रहणं कमलिनि ! किमनेनोपालम्भेन प्राप्तं सुचिरं सखीसङ्गमसुखं आर्ये ! मञ्जरिके ! तरङ्गसेने ! ते नमस्कारः सखि ! दामिनि ! दृष्टासि समुपनय हव्यवाहनार्चनकुसुमानि कुसुमिके ! देहि चितारोहणाय रोहिणिके ! हस्तावलम्बनं अम्ब ! धात्रि ! भव भवन्त्येवम्विधा एव कर्मविपाकाः पापकारिणीनां आर्यपादरजसामयमञ्जलिः परलोकप्रयाणे प्रणामोऽयं मातुर्मरणसमये कस्माल्लालसितेह लोके मदीयानानन्दमयो हृदयस्य मे निष्यन्दी वज्ररोमाञ्चकञ्चुकमङ्गीकृत्याङ्गानि वासन्तिके ! वामेन स्फुरितमक्ष्णा वृथा रससि वायस ! प्रत्युच्चे चीरनिवहे स्वणे चौणपुण्याः पुरोहूपितं तव हयानामुत्तरतः कस्येदमातपत्रमुत्पा-

रूपान्तरेण विभाव्यते प्रभावति ! कुरङ्गकेन सुगृहीतनामा-
नेनातपत्रेणावृतमयमार्य्यस्य देवि! दिष्ट्या वर्द्धसे देवस्य
हर्षस्यागमनमहोत्सवेनेति तच्च सत्वरमुपससर्प ददर्श च मु-
ह्यन्ती मग्निप्रवेशायोद्यतां राज्यश्रियं अवललम्बे च मूर्च्छानि-
मीलितलोकताया ललाटं हस्तेन तस्याः ससम्भ्रमम् ।

अथ तेन भ्रातुः प्रेयसः प्रकोष्ठबन्धानामोषधीनां रस-
विसारमिव प्रत्युज्जीवनक्षमं क्षरता वमतेव परिहार्य्यमणीना-
मचिन्त्यप्रभावमत्र तमिव नखचन्द्ररश्मिभिरुद्गिरता बन्धनेनेव
चन्द्रोदयच्युतशिशिरशीकरश्चन्द्रकान्तचूडामणिं मूर्द्धि मृणा-
लमयाङ्गुलिनेवातिशीतलेन निर्वापयता दह्यमानं हृदयं प्रत्या-
नयतेव कुतोऽपि जीवितमाह्लादकेन हस्तस्पर्शेन सहसैव चक्षु-
रुन्मील्य राज्यश्रियं धाताचासम्भाविताङ्गमस्याचिन्तिता पतित-
दर्शनस्य सहसा प्राप्तस्य भ्रातुः स्वप्नदृष्टस्येव कण्ठे समा-
श्लिष्य तत्कालाविर्भावनिर्भरेणाभिभूता सर्वात्मना दुःखसम्भा-
रेण नदीमुखप्रणालाभ्यामिव मुक्ताभ्यां स्थूलप्रवाहमुत्सृजन्ती
बाष्पवारिविलोचनाभ्यां हा तात ! हा अम्ब ! हा सख्य ! इति
व्याहरन्ती मुहुर्मुहुरुच्चैस्तरां रुमुद्भूतभगिनीस्नेहसङ्गा-
वभारभावितमन्युना मुक्तकण्ठमतिचिरं विक्रुश्य वत्सेव त्विदा-
नीमिति भ्राता करस्थगितमुखि ! समाश्वास्यमामापकल्याणि
कुरु वचनमग्रजस्य गुरोरित्याचार्य्येण याच्यमानापि देवि ! न
पश्यसि देवस्यावस्थां अलं रुदितेनेति राजलोकेनाभ्यर्थ्यमा-
नापि स्वामिनं भ्रातरमवेक्षस्वेति परिजनेन विज्ञाप्यमानापि
दुहितः विश्रम्यपुनटारटिष्यसि इति निवार्य्यमाणापि बान्धव-
वृद्धाभिः प्रियसखि ! यद्रोदिषि तूष्णीमास्स्व दृढं दूयते देव

इति सखीभिरनुनीयमानापि चिरम्भाविताऽनेकदुःसहदुःख-निर्भरबाष्पोत्पीड्यमानकण्ठभारा प्रभूतमन्युभारभरितान्तःकर-णाकारुण्यजनकेन स्वरेण कालमतिदीर्घं रुरोद। विगते च मन्युवेगे वह्निसमीपादपक्रम्य स्नात्वा वितानिकातरुतले निष-साद शनैराचार्य्यस्तु तत्तदा हर्षं इति विज्ञाय विवर्द्धिता-दरः सुतरां मुहूर्त्तमिवातिवाह्य निश्चतसंज्ञापितेन शिष्ये-णापनीतनलिनीदलैः स्वयमानन्दो मुखप्रक्षालनार्थमुदकमुप-निन्ये।

अथ नरेन्द्रोऽपि सादरं गृहीत्वानवरतरोदनाताम्रं चिरप्ररूढाम्बुजलजालं रक्तपङ्कजमिव प्रथमं स्वसुश्चक्षुर-क्षालयत्। पश्चादात्मनः प्रक्षालितमुखशशिनि महीपाले सर्व्वो निःशब्दः सम्बभूव लिखित इव सकलो लोकः। ततो नरेन्द्रो मन्दं मन्दमब्रवीत् स्वसारं वन्दस्व भदन्तमाचार्य्यं! एष ते भर्त्तृ-द्वितीयं हृदयमस्माकं च गुरुरिति वचनात्तु राजदुहितरि-परिणमति परिचये श्रवणोपान्ते पुनरानीतनेत्राम्भसि नमस्या-माचार्य्यः प्रयत्नरचितागतबाष्पाम्भःसम्मुज्यमानकण्ठयमनि-भयात् लोचनं किञ्चित्पराङ्मुखवदनो दीर्घन्निश्वस्य स्थित्वा च क्षणमेकं प्रदर्शितप्रश्रयं मृदुपटुमधुरया वाचा व्याजहार क-ल्याणनाम्न इति बालं चिरकालं न किल चिरमास्ते लोकः क्रियतामवश्यकरणीयस्नानविधिः स्नात्वा गम्यतां भूयसैव भूयो-भूमिरिति।

अथ भूपतिरनुरुध्यमानो लौकिकमाचारमाचार्य्यवचनं चोत्थाय स्नात्वा गिरिसरिति सह स्वस्रा तामेव भूमिमया-

सीत्। तत्र तां सपरिजनां प्रथममाहितावधानः प्रावर्त्तत परवतीं शुचा पतितपिण्डप्रदर्शितप्रयत्नप्रतिपन्नाभ्यवहरणामभोजयत्।

अनन्तरं च स्वयमाहारस्थितिमकरोत् भुक्तवांश्च बन्धनात् प्रभृति विस्तरतः स्वसुः कान्यकुब्जात् गौड़भूमिगमनं गौड़भूमेर्गुप्तगमनं गुप्तितो गुप्तनाम्ना कुलपुत्रेण निष्क्रामनं निर्गतायाश्च राज्यवर्द्धनमरणश्रवणं श्रुत्वा चाहारनिराकरणमनाहारायाश्च विन्ध्याटवीपर्य्यटनखेदं जातनिर्वेदायाश्च पावकप्रवेशोपक्रमं यावत् सर्वमशृणोत् परिजनतः। ततः सुखासीनमेकत्र तरुतले विविक्तभुवि भगिनीद्वितीयं दूरस्थितानुजीविजनं राजानमाचार्य्यः समुपसृत्य अनैकपामाङ्के स्थित्वा च किञ्चित्काललेशतोवक्तुमुपचक्रमे श्रीमन्नाकर्ण्यतामाख्येयन्नः किञ्चिदस्ति।

अयं हि यौवनोन्मादात् परिभूयसी भार्य्यां यौवनावतारतरलितात्मातारालावण्येन तारकाराजो रजनीकर्णपूरपुरुहूतपुरोधसोभिषणस्य धर्म्मपत्नीं पत्नीयन्नतितरां तारान्नामापजहार नाकतश्च पलायाञ्चक्रे चकोरलोचनया च तया सर्वाकाराभिरामया रमणीयेषु रममाणः प्रदेशेषु च नातिचिराञ्च कथञ्चित्सर्वगीर्वाणवचनगौरवात् गिरां पत्युः पुनरपि प्रत्यर्पयामास।

तां हृदयेनात्यदह्यत विरहेवरासोमया तस्याः सततंएकदातु शैलादुदयमानो विमले वारिणीश्रवणालयस्य सङ्क्रान्तमात्मनः प्रतिबिम्बमीक्षितवान्। दृष्टवांश्च तत्तदा सस्मार स्मरस्मेरगण्डस्थलस्य तारामुखस्य मुमोच च मन्मथोन्माद

मथ्यमानमानसः स्वस्य स्वजीयसः पीतकलकुमुदवनप्रभाप्रवा-
हधवलतराभ्यामिव लोचनाभ्यां बाष्पवारिबिन्दूनिव पतत एव
तानुदन्वति समस्तानाचेमु र्मुक्ताशुक्तयः तासां चतुरिकोशेषु मु-
क्ताफलीभूतानथापि तान् कथमपि रसातलवासी वासुकि-
र्नाम विषमस्तामधीशः।

सच तै र्मुक्ताफलैः पातालतलेऽपि तारागणमिव दर्श-
यद्भिरेकावलीमकल्पयत् चकार मन्दाकिनीति नाम तस्याः
साच सोमस्य सर्वासामोषधीनामपि पतेः प्रभावादनन्तविष-
स्वीकारादमृतसम्भवाच्च स्पर्शेन सर्वसत्वानां सन्तापापहा-
रिणी बभूव। यतस्तां सर्वदा विषोष्मशान्तये वासुकिः पर्य्यधत्त
समतिक्रामति च कियत्यपि काले कदाचित्तामेवैकावलीं तस्मा-
न्नागात् नागार्जुनोनाम भागैरेवनीतः पातालतलं भिक्षुरभि-
क्षुतले निर्गत्य रसातलाच्च समुद्राधिपतये सातवाहननाम्ने
नरेन्द्राय सुहृदे ददौ। सा चास्माकं कालेन कथमपि शिष्यपर-
म्पराया हस्तमागता यद्यपि भव इति भवति भवादृशां दातु
उपचारस्तथाप्यौषधबुद्ध्या बुद्धिमता सर्वसत्वराशिरक्षाप्रवृत्तेन
रक्षणीयः शरीरेणायुष्मता विषरक्षणाय स्वल्पतामेयमित्यभि-
धाय भिक्षो रसंशयवर्त्तिनश्चीवरपटान्तरसम्बद्धां मुमोच ता-
मेकावलीमुन्मुच्यमान एव यस्याः प्रभालेपिनि लब्धावकाशे-
विशदमहसि महीयसि विसर्पति रश्मिमण्डले युगपद्धवलाय-
मानेषु दिङ्मुखेषु उन्मीलितलतावभूत्कण्ठतैरामूलाद्विकसित-
मिव वनतरुभिरभिनवमृणाललुब्धैर्धावितमिव बहुपक्षपुट-
पटलधवलितगगनं वासरसिंहसयूथैः स्फुटितमिव भरवशा-

विशीर्यमाणधूलिधवलैर्गर्भनिर्भेदसूचितसूचिसञ्चयसूचिभिः केतकीपीठैः उद्दलितदलदन्तुराभिः प्रहसितमिव कुमुदिनीभिर्विधूतमदाभाभरितदिक्चक्रैश्च वीतमिव केसरिकुलैः प्रहसितमिव दशनांशुमाल्यालोकविलिप्यमानवनं वनदेवताभिः विकसितमिव शिथिलितकुसुमकेसराट्टहासनिरङ्कुशकुशकाननैर्भ्रान्तमिव ससम्भ्रमभ्रमितबालपल्लवपरिवेषश्वेतायमानैश्चमरीकदम्बकैः प्रस्रुतमिव स्नायमानफेनिलतरुतरङ्गोद्गारिणा गिरिनदीपूरेण परता रागेण लाभलोभादुदितमिव विकचमरीचिचक्राक्रान्तककुभा पूर्णचन्द्रेण प्रक्षालित इव दावानलधूमधूसरितदिगन्तरो दिवसः पुनरिव धौतानि वाष्पपातक्लिष्टानि नारीणां मुखानि ।

राजा तु मांसलैस्तस्या मयूखैराकुलीक्रियमाणोमुहुर्मुहुरुन्मीलयन्निमीलयंश्च चक्षुः कथमपि प्रयत्नाद्ददर्श तां सर्वाशापूरणीं पङ्क्तीकृतामिव दिङ्नागकरशीकरसंहतिघनमुक्तां शारदीमिव रेखीकृतां ज्योत्स्नां प्रकटपदकचिह्नां सञ्चारवीथीमिव बालेन्दो निश्चलीभूतं सप्तर्षिमालामिव हस्तमुक्तां अभिभूतसकलभुवनभूषणभूतिप्रभामिवेशानीं शशिकलाधवलगुणपरिस्पन्दीतां कीर्तिमिव निर्गतां क्षीरराशेरनेकमहामहीभृत्परम्परागतां गङ्गामिव दुर्गतिहरां अनवरतस्फुटितधवलांशुकां पुरःसरपताकामिवागत्य परमेश्वरपदा धनसारशुभ्रान्दन्तपङ्क्तिमिवाभिमुखस्यैश्वर्यस्य वरमनोरथपूरणसमर्थां स्वयमग्रजमिव भुवनश्रियो निजकरपल्लवामिव वरणाद्युल्लासस्थूरागविहसितिकामिव

वसुधाया मन्त्रयोगसाधनप्रवृत्तस्योद्यमालामिव राजधर्मस्य समुद्रालङ्कारभूतां सख्यालेख्यपट्टिकामिव कुबेरकोशस्यापश्यच्च तां विस्मयमाजगाम मनसा सुचिरं आचार्यस्तु तामुद्धृत्य बबन्ध बन्धुरस्कन्धभागे भूपतेः।

अथ नरपतिः प्रीतिमुपदर्शयन् आचार्याय रत्नानामेवं विधाना मनर्हा एव प्रायशः पुरुषाः तपःसिद्धिरियमाचार्यस्य देवताप्रसादो वा के वयमात्मनोऽपि किमु शक्यास्य प्रसादस्याख्यानस्य नादर्शनात् प्रभृति प्रभूतगुणगणगृहीतेव हृदयेन सङ्कल्पितमिदमामरणं आचार्येण उपयोग्याय शरीरं अत्र कामचारीव कर्त्तव्यानामिति समतिक्रान्ते च कियत्यपि काले गते चैकावलीअर्पणानामालापे लोकस्याश्यान्तरं लब्ध्वा विश्रब्धे भ्रातरि राज्यश्रीस्ताम्बूलवाहिनीं पत्रलता माहूय उपांशुकर्णमूले शनैरादिदेश। दर्शितविनया पत्रलता पार्थिवं व्यज्ञापयत् देव! देवी विज्ञापयति न स्मराचार्यस्य पुरः कदाचिदपि कुतो विज्ञापना इदं हि शुद्धामसह्यतां व्याहारयतः हतदन्तदशाभिशिक्षितविनयमबलानां हि प्रायशः पतिरवनौ [illegible]-भयविक्लवानां तु दुःखानलेन्धनायमानं प्राणिति शालीनत्वमेव केवलमार्यागमनेन कृतोऽपि प्रतिहतो मरणप्रयत्नः यतः काषायग्रहणाभ्यनुज्ञयानुगृह्यतामपुण्यभाजनं जन इति जनाधिपतिस्तु तदाकर्ण्य तूष्णीमेवातिष्ठत्।

अथाचार्यः सधीरमभ्यधात् आयुष्मति! शोकोऽपि नाम विपर्ययः पिशाचस्य रूपान्तर माक्षेपस्य तारुण्यन्तमसः विषयस्यान्तकं प्रेतनगरनायकोऽयमनिहत्तया दह-

नोऽय मपथ्योराजयक्ष्माय मलक्ष्मीनिवासी जनार्दनोऽय मपु-
ण्यग्रहग्रस्तः क्षपणोऽयमप्रतिबोधोनिद्राप्रकारोऽयमनलसधर्मा-
सन्निपातोऽय मशिवसहचरोऽविनायकोऽयमबुधसेवितो ग्रह-
मार्गोऽधर्मयोगसम्बन्धो ज्योतिष्प्रकारोऽयं स्नेहाद्वायुः कोपोमा-
नसादग्निः समभवत् भवादश्च क्षोभोरसातिशोषो रागात् का-
लपरिणामादन्तस्याजस्रस्राविणो हृदयमहाव्रणबहल-
मोहान्धकारलब्धप्रवेशस्य प्राणतस्करस्य शून्यताहेतो-
र्महाभूतग्रामाघातकस्य सकलविग्रहक्षपणदक्षस्य दोषचक्रव
र्त्तिनः कासश्वासप्रतापोपद्रवबहुलस्य देहदीर्घरोगस्यासदृष्टस
मुत्थितस्य सकललोकक्षयकधूमकोर्जितातापहरणचेरनभ्रवि-
द्रापितस्य स्फुरदनवद्यविद्योतमाननिग्रहग्रन्थिगहनगूढगर्भगहन
गम्भीराणि भूरिकाव्यकथाकठोराणि बहुशास्त्रोद्वहनहन्ति-
द्विषामपि हृदयानि नालं सोढुमायातं किमुत च नवमालिका-
कुसुमकोमलानां सरसनिबिड़तन्तुदुर्बलानामबलानां हृदयमेवं
सत्यपि सत्यव्रते! वद किमत्र क्रियते क उपालभ्यते कस्य पुरस्ता-
दुच्चैराक्रन्द्यते हृदयदाहिदुःखं वाख्याप्यते सर्वमक्षिणीनिमील्य
सोढव्यमेव मूढेन मर्त्त्यधर्मणा पुण्यवत्यः पुरातन्यः प्रवृत्तयः एताः
केन शक्यन्तेऽन्यथा कर्त्तुं संसरन्त मन्तन्दिवं द्राघीयसोजन्मजरा-
मरणघटीयन्त्रराजिरक्षितं सर्वपञ्चजनानां पञ्चमहाभूतप्रपञ्चा-
कुलदृष्टितान्तःकरणव्यवहारदर्शननिपुणाः सर्वङ्कषा विषमा
धर्मराजधर्मस्थितयः क्षणमस्य क्षममाणा गलन्त्यायुष्काला-
कलनकुशलाः निलये कालनाडिका जगति सर्वजन्तुजीवोप-
हारपातिनि सिञ्चति चण्डिकेवाटन्ती अनवरतप्राणप्रया-

णारकदनपटवः प्रेतपतिपटहाः प्रतिदिशं पर्यटन्ति पेटकैः प्रतिपुरं प्रतप्तलोहलोहिताक्षाः कालकूटकान्तिकायाः कालपाशपाणयः कालपुरुषाः भीषणकिङ्करघटीपुटपटुटङ्कारभयङ्कराः सर्वसत्त्वसंरम्भणा घोराघातघोषणा दिशिदिशि वहन्ति बहुविधचिताधूलिधूसरितः प्रेतपताकापटुपटपतितगृध्रहृदयः कष्टशोकाकुलकुटुम्बिनि विकीर्णकेशकलापशबलशिखिशिखासहस्रसंकुलाः किलिकिलायमानश्मशानशिबिरशिवाशवकाः परलोकसार्थकसार्थप्रस्थानरथ्यावीथयः सकललोककवलावलेपनलम्पटा बहुला चिताङ्गारकालिकालरात्रिजिह्वा जीविनामतिजीवतां त्वयि मयि च्युता च भगवतः सर्वभूतभुजो बुभुक्षत्योरतिदूरवाहिनी चानित्यता तदीक्षणिकाकाचमहाभूतग्रामगोष्ठीगात्रेषु भङ्गुराणि गात्रयन्त्रपञ्जरदारूणि देहिनामशुभभोगावेशविवशा विशरारवः शरीरनिर्माणपरमाणवश्छिद्रुरा जीवनिबन्धनपाशतन्त्रीतन्तवः सर्वात्मना विश्वविनश्वरमेव मवष्टत्य नात्यर्थं मर्हसि मेधाविनि! स्मृतिमतिमनसि तमसः प्रसरं दातुं एकोऽपि हि प्रतिसंख्यानक्षणोद्गारी भवति धृतेः।

अपिच दूरगलितेऽपि च शोके नन्विदानी मेवेक्षणीय एवायं ज्येष्ठः पितृकल्पोभ्राता भवत्या गुरुरितरया को न बहुमन्येत कल्याणरूपमीदृशं सङ्कल्पं भगवत्याः काषायग्रहणकृतमखिलमुज्ज्वलप्रशमनकारणं भगवतीप्रव्रज्यायाः खल्विदमात्मवतां महाभागस्तु भिनत्ति मनोरथमधुना यदयमत्र दिशति यदि भ्रातेति यदि ज्येष्ठ इति यदि वत्सल इति सर्वथा स्थातव्यमस्य नियोगे इत्युक्त्वा व्यरंसीत्।

उपरतवचसि तस्मिन् जगाद नरपतिः आर्यमपहाय कोऽन्य एव मभिदध्यात् अभ्यर्थितदैवनिर्मिता विषमपदावलम्बनहस्ता भवन्ति लोकस्य स्नेहदीप्रवृत्तयोमोहान्धकारध्वंसनप्रदीपाः किं तु प्रणयप्रदानदुर्ललिता दुर्लभमपि मनोरथमतिप्रीतिरभिलषति अतिप्रतिस्टहीताः प्रथममेव गुणास्तावता कायकलिमुचा जनेन उपयोगस्तु विनियोगस्यास्य लघूनि गुरूणि वा ।

अथ तथा तस्याभिनन्दितप्रणये पार्थिवस्तामुषित्वा विभावरीमुषसि वस्त्रालङ्कारादिप्रदानपरितोषितं विससर्ज निर्घातमाचार्येण सह स्वसारमादाय प्रयाणकैः कतिपयैरेकतटमनुजाह्नवि निविष्टं प्रत्युज्जगाम । तत्र राज्यश्रीव्यतिकरकथाः कथयत एव प्रणयिभ्यो रविरवततार गगनतलात् बहलमधुपङ्कपिङ्गलपङ्कमाकुलवसञ्चुकोच चक्रवाकवल्लभो वासरः विप्रकीर्णरुधिरधारारुणवर्णानि लोकालोकानि यजूंषीव याज्ञवल्क्यवक्रान्तानि निजवपुषि पाटलत्विषि पापमुषि पूषा पुनरपि सञ्जहार जालकानि रोचिषां क्रमेण च स मुमोच पद्मरागरोचिष्णु रुणांशु रुणीषबन्धबद्ध पश्चिमाचलस्य सहजचूडामणिरिव वृकोदरकरपुटोत्पाटितप्रत्यग्रशोणितशोणाङ्गरागरौद्रो द्रौणायनस्य रुद्रभिक्षादानदक्षकरमथनमुक्तमुण्डशिरानालनाड़िरुधिरपूरितरुणककपिलः कपालकर्परइव पैतामहः पितृबधकुपितरामरागरचितपृथ्वीकण्टककार्तवीर्य्यः सकूटकुट्टाककुठारमुण्डनतुष्टदुष्टक्षत्रकण्ठकुहरकुल्याप्रणालीसहस्रपूरितो हृदयइव च दूरारोहिधीरैः धीरो भयनिगूढकरचरणमुण्डमालाकृतिः गुरुसगरखरनखर

प्रहारजरत्सत्वरकृत्तापिच्छणाक्षिप्तक्षतजोक्षिता विहारसुरकमठ इव विलोक्यमानो नभस्यरुणगर्भो मांसपिण्ड इव खण्डितमानमानीय कालातिपातदूयमानदाक्षायणीक्षिप्तस्तटे मेरोरसुरवधाभिचापकूपपिशुनः शोणितक्वाथकषायित कुक्षिरतिविशङ्कटकटाह इव बार्हस्पत्यसद्योगलितदानवदेहालोभितोपलेपभीषणो मुखमण्डलाभोग इव महाभैरवस्य मुहूर्तमदृश्यत

वेदान्तावलम्बितनिगृहीतार्द्रमांसभारेव बभासे वासरावसानवेलावेतसी विततबालसन्ध्यारागरज्यमानवरोकसम्पुटविष्टमधुकैटभरुधिरपटलपाटलवर्णा समवसिते च सन्ध्यासमये चक्रवाक इव निजकुलकण्टकक्षतयुगकरणोद्यताया दिवः श्रिया सह तद्द्वीपविजिगीषया चलितायाः श्वेतद्वीपदूत इव चायत्या श्वेतभानुरूपानीयत निशायां नरेन्द्रा इति ।

इति श्रीहर्षचरिते अष्टमोच्छ्वासः ।

श्रीहर्षचरितं सम्पूर्णमस्तु ।

---

७ काव्यसंग्रह (सम्पूर्ण) ५
८ लिङ्गानुशासन सटीक ।०
९ ऋतुसंहार सटीक ।।।
० विक्रमोर्वशी सटीक १॥०
१ वसन्ततिलक भाण ।=
२ गायत्री व्याख्या ॥०
३ सांख्यदर्शन (भाष्यसहित)
सांख्य प्रवचन भाष्य २
४ भोजप्रबन्ध ॥।०
५ नलोदय सटीक ॥=
६ ईश केन कठ प्रश्न मुण्ड
माण्डूक्य (सटीक सभाष्य) ५
७ छान्दोग्य (उपनिषद्)
सभाष्य सटीक ५
८ तैत्तिरीय ऐतरेय श्वेताश्वतर
(उपनिषद्) सभाष्य सटीक २
९ बृहदारण्यक उपनिषद्
सभाष्य सटीक १०
० सुश्रुत वैद्यक ४
१ शार्ङ्गधर वैद्यक १
२ वेताल पञ्चविंशतिः ॥।०
३ पातञ्जलदर्शन सभाष्य सटीक ४
४ आत्मतत्वविवेक बौद्धाधिकार २
५ मुक्तिकोपनिषत् =
६ उपमान चिन्तामणि ।०
७ नागानन्द नाटक १
८ पूर्णप्रज्ञदर्शनम् मध्वस्वामि
कृत भाष्यसहितम् २
६९ चन्द्रशेखर चम्पूकाव्यम्
सम्पूर्ण ३
७० सामवेदस्य मन्त्र ब्राह्मणम्
भाष्य सहितम् २
७१ आरण्यसंहिता भाष्यसहित १
७२ विद्धशालभञ्जिकानाटिकासटीक १
७३ कारण्डव्यूह बौद्धशास्त्रम् २
७४ कुवलयानन्द-सटीक अलङ्कार २
७५ प्रियदर्शिका नाटिका-सटीक
श्रीहर्ष विरचित ॥०
७६ सारस्वतव्याकरण-सटीकपूर्वार्द्ध १।
७७ वासवदत्ता-सटीक २
७८ कालिदास कृत
पुष्पवाण विलास काव्य सटीक ॥०
७९ महिम्न शतकम् पदारविन्द
शतकम् स्तुति शतकम्, मन्दस्मित
शतकम्, कटाक्ष शतकम् १
८० मनुसंहिता कुल्लूकभट्ट कृत
टीका सहित ५
८१ नैषध चरितम् मल्लिनाथ कृत
टीका सहित १०
८२ चन्द्रालोक प्राचीन अलङ्कार ॥०
८३ वीरमित्रोदय स्मृति शास्त्र १०
८४ भावप्रकाश वैद्यक १०
८५ प्रबोधचन्द्रोदय
नाटक सटीक २

कलिकाता संस्कृतविद्यामन्दिरे-बि, ए, उपाधिधारिणः
श्रीजीवानन्दविद्यासागर भट्टाचार्य्यस्य सकाशात् लभ्यानि ।

